**वैलक्षण्याच्चेति ॥ पुरुषेति ॥** जीवप्रयत्नापेक्षयेत्यर्थः । तदपेक्षयेति यावत् । 'प्रवृत्तिः' विषयेषु व्यापृतिः । इन्द्रियाणां जीवप्रयत्नापेक्षप्रवृत्तिकत्वं कुत इत्याशङ्क्याऽह - **दृश्यत इति ॥** यत इन्द्रियाणां जाग्रत्येव प्रवृत्तिर्दृश्यते, सुषुप्तौ चाप्रवृत्तिर्दृश्यते, अत इन्द्रियाणां प्रवृत्तिः पुरुषापेक्षयैव दृश्यत इति योजना । एवमिन्द्रियधर्मिकं वैलक्षण्यं सप्रमाणकं प्रदर्श्य तदभावरूपवैलक्षण्यं मुख्यस्याप्याह - **नेति ॥** न पुरुषापेक्षया प्रवृत्तिः मुख्यस्येत्यर्थः । [1]**किन्तु केवलेश्वरेच्छधीनैवेत्यर्थः** । मुख्यप्राणस्य प्रवृत्तिर्न पुरुषापेक्षेत्येतत्कुत इत्यतः सौत्रचशब्दसूचितां श्रुतिं पठति - **इति च श्रुतिरिति ॥** इति श्रुतिश्चेत्यन्वयः । चः प्रत्यक्षसमुच्चये । यत इति शेषः । अनेनोभयत्र वैलक्षण्यासिद्धिः परिहृता । वैलक्षण्यादिति हेतुवाक्यस्य त एवेन्द्रियाणीति प्रधानसाध्येनान्वयः । अनेन सूत्रेऽप्यर्थश्चशब्दः श्रुतिसूचकश्च । त इन्द्रियाणीति मुख्यप्राणस्यैवानिन्द्रियत्वोक्तिविरोधो नेति साध्यं चानुषञ्जनीयम् । तथा च 'अपि' श्रेष्ठस्येशवशत्वेऽपि न 'ते' इत्युक्तिविरोधः । कुतः ? 'अपि' ईशाधीनत्वेऽपि 'वैलक्षण्यात्' इन्द्रियाणामीश्वरजीवोभयवशप्रवृत्तिकत्वात् मुख्यस्य च केवलेश्वराधीनप्रवृत्तित्वरूपवैलक्षण्यात् । न चासिद्धिः 'वैलक्षण्यात्' इन्द्रियेषूक्तवैलक्षण्यस्य प्रत्यक्षसिद्धत्वात्, मुख्यप्राणे च श्रुतिसिद्धत्वादिति सूत्रार्थ उक्तो भवति ।

षट्प्रश्ने हि 'एष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते' (प्र.४.२.) इति पूर्ववाक्ये जीवस्य स्वापकाले श्रोत्रचक्षुर्घ्राणरसनत्वग्वाक्पाण्युपस्थपायुपादाख्यदशेन्द्रियव्यापाराभावमभिधाय तर्हि कानि तदा जाग्रतीति [2]पिप्पलादऋषिं प्रति सौर्यायणिऋषिप्रश्नस्योत्तरमुच्यते - **प्राणाग्नय इति ॥** स्वापकाले 'एतस्मिन् पुरे' शरीरे 'प्राणाग्नयः' प्राणापानादिमुख्यप्राणरूपाण्येवाग्नयः त एव 'जाग्रति' शरीरधारणादिव्यापारं कुर्वन्तीत्यर्थः ।

**॥ इति त इन्द्रियाधिकरणम् ॥ ११ ॥**

---

१.वाक्यमिदं '**ख.**' मातृकागतं मुद्रितपुस्तके न दृश्यते । २. '**पिप्पलादेन**' ख.

॥ १२. सञ्ज्ञाधिकरणम् ॥

**'विरिञ्चो वा इदं विरेचयति विदधाति ब्रह्मा वाव विरिञ्च एतस्माद्धीमे रूपनामनी' इति गौपवनश्रुतिः ।**

॥ १२. सञ्ज्ञाधिकरणम् ॥

अत्राधिकरणे नामरूपविषये श्रुतिविरोधः परिह्रियते । न चासङ्गतिः । नामरूपात्मकप्रपञ्चमध्ये शरीरस्यापि प्रविष्टत्वात् तस्य प्रकृतेन्द्रियाश्रयत्वात् तद्विचारस्याध्यात्मविचारपादेऽन्तर्भावोपपत्तेः । यद्वा - रूपशब्दो देहार्थपरः, नामशब्दश्च तद्वाचकशब्दपर इति नासङ्गतिः । तत्त्वप्रदीपे तु प्राण एव प्राणत्वादुपरि ब्रह्मपदमधिष्ठास्यतीति ज्ञापनाय प्राणप्रसङ्गे चतुर्मुखप्रसञ्जनमिति सङ्गतिरुक्ता । [1]**चन्द्रिकायामपि विरिञ्चस्य पूर्वं मुख्यप्राणत्वाख्यत्वाच्च सङ्गतिरित्युक्तम्** । शरीरं किं विरिञ्चसृष्टं परमात्मसृष्टं वेति सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति - **विरिञ्च इति ॥** वाशब्द एवार्थः । तथा च विरिञ्च एव 'इदं' विश्वं नामरूपात्मकं विरेचयति । तस्य व्याख्यानं - 'विदधाति' करोतीति । तत्त्वप्रदीपे तु 'विरेचयति' सृजति 'विदधाति' विशेषेण धारयति नियोजयति चेति व्याख्यातम् । विरिञ्चशब्दोक्तः क इत्यत आह - **ब्रह्मेति ॥** चतुर्मुख इत्यर्थः । वावेति प्रसिद्धौ । ब्रह्मणः कुतो विरिञ्चत्वमित्यतस्तदर्थभूतविरेचकत्वस्य तत्र प्रसिद्धत्वादित्याह - **एतस्माद्धीति ॥** ब्रह्मण इत्यर्थः । हिशब्दः प्रसिद्धौ । 'इमे' प्रसिद्धे रूपनामनी, उत्पद्येते इति शेषः । अत्र 'रूपं च तदपेक्षया' इति स्मृतेः अयोगिप्रत्यक्षगम्यं रूपं त्रिवृत्क्रियापेक्षया भवति । नाम च तद्व्यवहार्यं तदपेक्षं भवतीति तत्त्वप्रदीपोक्तेः। अयोगिप्रत्यक्षगम्यम् अस्मदादिशरीरमेव रूपशब्देनोच्यते, अयोगिभिर्व्यवहार्यमेव नामशब्देनोच्यते । अस्मदादिशरीरस्यैव त्रिवृत्कृतोपादानकत्वात्, उपादानार्थमेव त्रिवृत्क्रियापेक्षणात्, अयोगिभिर्व्यवहार्यनाम्नामेव रूपापेक्षत्वाच्च, न तु योगिप्रत्यक्षगम्यदेवतादिशरीरमपि रूपशब्देनोच्यते, तस्य

---

१.वाक्यमिदं 'ख.' मातृकागतं मुद्रितपुस्तके नास्ति ।

केवलभूतोपादानकत्वेन तदर्थं त्रिवृत्क्रियानपेक्षणात् । योगिभिर्व्यवहार्यनाम्नां रूपानपेक्षत्वाच्च । श्रुतिरित्यनन्तरं विरिञ्चस्य नामरूपकर्तृत्वं वक्तीति शेषः ।

**'यस्माद् विरेचयेत् सर्वं विरिञ्चस्तेन भण्यते ।**
**एको हि कर्ता जगतो ब्रह्मैव तु चतुर्मुखः ॥' इति च युक्तिर्ब्राह्मे ।**

श्रुत्यन्तरापेक्षयाऽस्याः प्राबल्योपपादनाय युक्त्युपेततां दर्शयति-**यस्मादिति ॥** यस्मात् 'सर्वं' नामरूपात्मकं 'विरेचयेत्' सृजेत् तेन कारणेन ब्रह्मा विरिञ्च इति भण्यते । [1]नास्य कर्तृत्वं द्वारत्वाभिप्रायं, किन्तु मुख्यमेवेत्याशयेन अस्य साध्यमाह-**एको हीति ॥** [2]हिः प्रसिद्धौ । तुरेव । यस्मादित्यावर्तते, तेनेति च । तथा च यस्माद् विरिञ्चो भण्यते, तेन ब्रह्मैव जगतः 'एको' मुख्यः कर्ता, न द्वारभूतः, स च 'ब्रह्मा' प्रसिद्धश्चतुर्मुख एवेत्यर्थः । चतुर्मुख इत्यनेन श्रुतिगतो ब्रह्मशब्दो जगत इत्यनेनेदंशब्दश्च विवृतः । केचित्तु - श्रुतौ विरेचकत्वनिमित्तेन विरिञ्चशब्द-वाच्यत्वोक्तावपि तस्य जगत्स्रष्टृत्वे हेतुत्वानुक्तेः तदर्थं यस्मादित्यादिस्मृत्युदा-हरणम् । तथा च यस्माद् विरिञ्चो भण्यते तस्माद् एको हि कर्ता जगत इत्यावृत्तिं विना स्मृतिवाक्यार्थमाहुः । **इतीति ॥** इति ब्राह्मवचने विरेचयितृत्वनिमित्तक-विरिञ्चशब्दवाच्यत्वरूपयुक्तिश्चोक्तेत्यन्वयः । न केवलं श्रुतिरिति चशब्दार्थः । अनेन विरिञ्चस्यैव नामरूपात्मकदेहादिकर्तृत्वं तथा श्रुतेः विरिञ्चत्वयुक्तेश्चेति सयुक्तिकः पूर्वपक्षस्सूचितो भवति ॥

**'अथ कस्मादुच्यते परम इति परमाद्ध्येते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति । अथ कस्मादुच्यते ब्रह्मेति बृहत्त्वाद्बृं[3]हितत्वाच्च' इत्याग्निवेश्यश्रुतिः ।**

---

१. 'न च हेत्वसिद्धिः द्वारकारणत्वं वा तस्येत्याह - एको हीति ॥'
इति वाक्यविन्यासः 'ख.' मातृकायाम् ।
२. 'हि यस्माच्चतुर्मुखो ब्रह्मैव जगतो मुख्यः कर्ता तस्मादित्यर्थः' इति ख.
३. 'बृंहणाच्च ' ह.

एवं विरिञ्चकर्तृत्वे श्रुतिमुदाहृत्य परमात्मकर्तृत्वेऽपि तामुदाहरति- **अथेति** ॥ प्रश्नेऽथशब्दः । विष्णुः परम इति कस्मादुच्यत इति प्रश्नस्योत्तरमाह- **परमादिति** ॥ 'हि' यस्मात् 'एते नामरूपे' सञ्ज्ञामूर्ती 'परमात्' विष्णोः 'व्याक्रियेते' सृज्येते तस्मादेनं परम इत्याहुः कवय इत्यर्थः । अत्र परमत्वे नामरूपकर्तृत्वाख्यो हेतुरुक्तः । स च नाप्रयोजकः । अवसरस्याल्पशक्तेः सर्वनामरूपकर्तृत्वायोगात् । 'कर्तृत्वात् सगुणं ब्रह्म' इति भागवतोक्तेरिति ध्येयम् । न केवलं नामरूपकर्तृत्वं परमत्वे हेतुः, किन्तु विष्णोर्ब्रह्मत्वेऽपि हेतुरिति सूचनाय ब्रह्मशब्दं प्रश्नपूर्वं निर्वक्ति- **अथेति** ॥ यद्वा - 'ब्रह्मा वा' इति श्रुतिगतब्रह्मशब्दप्रवृत्तेः सावकाशत्वोपपादनायेदमुदाहृतम् । पूर्ववत् प्रश्नार्थोऽथशब्दः । 'बृहत्त्वात्' वृद्धत्वात् 'बृंहितत्वात्' नामरूपात्मकजगत्सृष्ट्यादिगुणबृंहितत्वात् पूर्णत्वाच्च ब्रह्मेत्युच्यते इत्यर्थः । **श्रुतिरिति** ॥ विष्णोर्नामकर्तृत्वं वक्तीति शेषः ।

**अत आह-**

**सू.- ॐ ॥ सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ ॐ ॥ २१ ॥**

**नामरूपक्लृप्तिः परादेव । 'सर्वाणि रूपाणि विचित्य धीरो । नामानि कृत्वाऽभिवदन् यदास्ते' (तै.आ.३.१२.) इति श्रुतेः ।**

सिद्धान्तयत् सूत्रमवतार्य व्याचष्टे - **अत इति** ॥ सञ्ज्ञामूर्तिक्लृप्तिरित्यस्य व्याख्यानं - **नामरूपक्लृप्तिरिति** ॥ नामरूपात्मकदेहादिप्रपञ्चस्योत्पत्तिरित्यर्थः । 'परात्' परमात्मन इति लब्धविशेष्योक्तिः । [१]न विरिञ्चादित्येवकारार्थः । भवतीत्यध्याहार्यम् । कुत इत्यतः प्रवृत्तमुपदेशादिति हेत्वंशं व्याचष्टे - **सर्वाणीति ॥ इतीति ॥** इति तैत्तिरीयपुरुषसूक्तमन्त्रोक्तत्वादित्यर्थः । श्रुतौ यदिति लिङ्गव्यत्यासः । तथा च 'यो धीरः' परमधैर्यशीलो भगवान् सर्वाणि रूपाणि

---

१.'न तु' क.

'विचित्य' सृष्ट्वा तेषां 'नामानि' वाचकशब्दांश्च [1]कृत्वा तानि तैः 'अभिवदन्' व्यवहरन्नास्ते । तमेवं विद्वान् अमृतो भवतीत्यर्थः ।

**त्रिवृत्कुर्वत इति हेतुगर्भः । त्रिवृत्करणापेक्षत्वान्नामरूपयोः ॥**

नामरूपयोः विरिञ्चसृष्टत्वेऽप्यस्ति श्रुतिरतः [2]कथमनया परमात्मसृष्टत्वनिश्चय इत्यतस्तत्परिहारत्वेन प्रवृत्तं भावप्रधानत्रिवृत्पदघटितं त्रिवृत्कुर्वत इत्यंशं परस्य नामरूपकर्तृत्वे हेतुसमर्पकतया व्याचष्टे – **त्रिवृत्कुर्वत इति** ॥ त्रिवृत्कुर्वत इति विशेषणनिर्देशो हेतुगर्भः वाच्यो यस्य स हेतुगर्भो लिङ्गवाचीत्यर्थः । तथा च सिद्धान्त-श्रुतेः प्राबल्यज्ञापनाय त्रिवृत्क्रियाकर्तृत्वरूपपरमात्मविशेषणवाचकपञ्चम्यन्त-शब्देन परस्य नामरूपकर्तृत्वे त्रिवृत्त्वकर्तृत्वादिति युक्तिरुक्तेति भावः । कारणेन कार्यानुमानमिदम् ।

ननु त्रिवृत्त्वं नाम पृथिव्यप्तेजोरूपभूतत्रयस्य मिश्रीभावः, तत्कर्तृत्वे च कुतो नामादिकर्तृत्वं हरेः । तथा च हेतुरप्रयोजक इत्यत आह – **त्रिवृदिति** ॥ त्रिवृत्करणसापेक्षत्वादित्यर्थः । 'नामरूपयोः' करणस्येति शेषः । तथा च त्रिवृत्करणमन्तरेण रूपोत्पत्त्यभावस्य वक्ष्यमाणत्वात् तदभावे च नामानुपपत्तेः साक्षाद्व्यवधानेन वा नामादिकरणस्य त्रिवृत्करणसापेक्षत्वेन तत्समाविनाभूतकार्यत्वात् तदभावे तदनुपपत्तेः नाप्रयोजकतेति भावः । न च विष्णोस्त्रिवृत्कर्तृत्वा-सिद्धिरित्याशङ्कोत्तरत्वेनाप्युपदेशादिति सौत्रहेतुर्योज्यः । 'सेयं देवतेमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' (छां.६.३.३.) इति श्रुतेरिति तदर्थः । 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इतिवत् 'इयं' विष्ण्वाख्या देवता 'अनेन जीवेन' तदाख्येनानिरुद्धेनाऽत्मना स्वरूपेण 'इमाः' तेजोऽबन्नाख्यदेवतास्त्रीन् देवाननुप्रविश्य नामरूपे 'व्याकरोत्' विशेषेणाकरोत्, तदर्थं 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्यर्थक्रमेणेयं श्रुतिर्व्याख्याता तत्त्वप्रदीपे ।

---

१.'कृत्वा सृष्ट्वा' क. ख. २.'अनयोः' क.

**'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः ।**
**एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तराः ॥' [1]इति पाद्मे ।**

ननु पूर्वपक्ष्युदाहृतश्रुतेरपि विरिञ्चत्वादियुक्तियुक्तत्वेन बलवत्त्वात् पुनरनिर्णय एवेत्यतस्तस्याः सावकाशतां स्मृत्यैव दर्शयति - **सर्वेति** ॥ व्यवहारस्येत्युक्तेः षष्ठ्यर्थे सप्तमी । तथा च यतो 'विरिञ्चादिसर्वनाम्नां' सर्वसञ्ज्ञानां 'रूपाणां' मूर्तीनां 'व्यवहारेषु' अभिलपनादिव्यवहाराणां च 'व्यवहारेषु' व्यवहारविषयीभूतानां सर्वनाम्नामिति वा 'केशवः' सृष्ट्यादिना ब्रह्मरुद्रप्रवर्तको हरिरेव 'एको' मुख्यः स्रष्टा 'तत्' तस्माद् ब्रह्माद्या देवाः 'अवान्तराः' सृष्टौ द्वारकारणीभूता इत्यर्थः । तदवान्तरा इत्यस्यैकपदत्वे तस्य विष्णोस्तस्यां सृष्टौ द्वारभूता इत्यर्थः । यतस्सर्वरूपाणां स्रष्टाऽतः सर्वनाम्नां चेत्यप्यन्वयः । तथा च पूर्वपक्षिश्रुतेः द्वारविषयत्वेन सावकाशत्वान्न तद्विरोध इति भावः । न च मुख्यार्थसम्भवे किममुख्यार्थाश्रयणेनेति वाच्यम् । यतः कर्तृत्वशक्तिरूपं मुख्यकर्तृत्वम् 'एक एव स्रष्टा' इत्यनेन विष्णोरेव, नान्येषां तस्यैव त्रिवृत्कर्तृत्वादित्युक्त्वा 'ब्रह्माद्यास्तदवान्तराः' इत्यनेनेतरेषां द्वारकारणत्वरूपामुख्य-कर्तृत्वमेवोक्तम् । इति पाद्मे इत्यस्य वचनादित्यध्याहारेण नामरूपक्लृप्तिः परादेवेति पूर्वेणान्वयः ।

**'त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया ।**
**रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः ॥**
**अतो नाम्नश्च रूपस्य व्यवहारस्य चैकराट् ।**
**हरिरेव यतः कर्ता पिताऽतो भगवान् प्रभुः ॥'**
**इति च ब्रह्माण्डे ॥ २१ ॥**

**॥ इति सञ्ज्ञाधिकरणम् ॥ १२ ॥**

(७) सूत्रार्थे स्मृतिसम्मतिं चाऽह - **त्रिवृदिति** ॥ आद्यश्चस्त्वर्थः । तथाशब्दः उपमायाम् । द्वितीयश्चशब्दः समुच्चये । भवतीति शेषः । तथा च 'यतस्त्रिवृत्क्रिया'

---

१. 'इति च पाद्मे' ह.

पृथिव्यप्तेजसां मिश्रीभावकरणं विष्णोस्सम्बन्धि भवति। यतश्च रूपं 'तदपेक्षया' त्रिवृत्क्रियाऽपेक्षयैव भवति। यतश्च नाम 'रूपापेक्षं' तत्साध्यं यतश्च 'व्यवहारः' अभिलपनादिरूपः 'तदात्मकः' नामापेक्षः अतो नाम्नो रूपस्य व्यवहारस्य च हरिरेव 'एकराट्' स्वतन्त्रः कर्ता, नान्यः। यतः कर्ता भगवान् अतः सर्वजीवानां पिता। न केवलमेतावत्, किन्तु 'प्रभुः' स्वामी चेत्यर्थः। स्मृतिद्वयसमुच्चये चशब्दः।

॥ इति सञ्ज्ञाधिकरणम् ॥ १२ ॥

॥ १३. मांसाधिकरणम् ॥

**'अद्भ्यो हीदमुत्पद्यते आपो वाव मांसमस्थि च [1]भवन्त्यापः शरीरमाप एवेदं सर्वम्' इति कौण्डिन्यश्रुतिः ।**

॥ १३. मांसाधिकरणम् ॥

अत्राधिकरणे शरीरकारणश्रुतिविरोधः परिह्रियते । तत्रोपलक्षणाभिप्रायेण कोटिद्वयमात्रे सन्देहबीजं दर्शयन् पूर्वपक्षं च दर्शयति - **अद्भ्य इति** ॥ हिशब्दः प्रसिद्धौ । 'इदं' शरीरम् । एवं प्रतिज्ञातमपां सर्वशरीरकारणत्वमुपपादयति - **आप इति** ॥ आपो मांसं भवन्ति, अस्थि च भवन्तीति प्रत्येकमन्वयः । यत इति शेषः । अतः 'आपः शरीरम्' अब्जन्यं शरीरमित्यर्थः । शरीरस्य मांसाद्यात्मकत्वादिति भावः । निगमयति - **आप एवेति** ॥ 'इदं' शरीरम् । मांसादिकं सर्वम्, आपस्तज्जातम् । **श्रुतिरिति** ॥ आप्यत्वं शरीरस्य वक्तीति शेषः । अनेन शरीरमाप्यमेवेत्येकः पूर्वः पक्षः प्रदर्शितो भवति ।

**'अम्मयं तु यतो मांसमतस्तृप्तिश्च मांसतः ।' इति च भारते ॥**

नन्वाप्यत्वश्रुतेः पार्थिवत्वादिप्रापकश्रुत्यन्तरविरोध इत्याशङ्क्य सयुक्तिकत्वेनास्याः प्राबल्यमित्याह - **अम्मयमिति** ॥ तुशब्दोऽवधारणे भिन्नक्रमः । यतो मांसमम्मयम्, तज्जन्यम्. अत एव मांसतः तृप्तिर्जायते तर्पकत्वस्याब्धर्मत्वेन कार्यानुस्यूतेरावश्यकत्वादिति भावः । 'भारते' शरीरस्याऽप्यत्वे युक्तिरुक्तेति शेषः । शरीरैकदेशस्य मांसस्याऽप्यत्वे तर्पकत्वाख्ययुक्तिकथनाच्छरीरस्याऽप्याप्यत्वे युक्तिरुक्तप्रायेति भावः ।

**'पृथिवी शरीरमाकाशमात्मा'** (बृ.५.२.१३.)[2]**इति च श्रुतिः ।**

संशयकोट्यन्तरप्रदर्शनाय श्रुत्यन्तरमुदाहरति - **पृथिवीमिति** ॥ 'यत्रास्य पुरुषस्य

१. 'भवत्यापः' । ह.

२. 'इति श्रुतिः' ह.

मृतस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रं दिशःश्रोत्रं पृथिवीं शरीरमाकाशमात्मा' इति बृहदारण्यकश्रुतौ वागादीनामंशेन गमनमुक्त्वा आत्मशब्दितदेहान्तर्गतपरमात्मरूपस्याऽकाशपदोक्तमूलरूपप्राप्तिरुच्यते। तथा च पुरुषस्य वाग् अग्निमप्येति, पुरुषस्य शरीरं 'पृथिवीमप्येति' तत्र लीनं भवति, पुरुषस्य 'आत्मा' देहान्तर्गतो हरिः 'आकाशं' मूलरूपिणं परमात्मानं प्राप्नोतीत्यर्थः। 'आत्मा' जीवः आकाशं परमात्मानमाप्नोतीति व्याख्यानं तु 'पुरुषस्य' जीवस्य 'आत्मा' जीव इत्यन्वयायोगादयुक्तम्। 'आकाशाख्यं स्वरूपं तु विष्णुस्तद्धृदि संस्थितः' इति बृहद्भाष्यविरुद्धं च। इति श्रुतिरित्यनन्तरं शरीरस्य पार्थिवत्वमाहेति शेषः। चो भिन्नक्रमः समुच्चये। [१]कार्यस्य कारण एवाप्ययनियमादन्नमयशरीरस्य पृथिवीकार्यत्वसिद्धिः। अनेन शरीरं पार्थिवमित्यपरः पूर्वः पक्षः प्रदर्शितो भवति। एवं शरीरस्य तैजसत्वपूर्वपक्षेऽपि 'सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति' (ऐ.ब्रा.७.४.) इति बह्वृचब्राह्मणवाक्यमुदाहर्तव्यम्। 'सः' यजमानो देवेभ्यः स्वदत्ताहुतिप्रदानेन देवपोषकत्वेन 'देवयोन्याः' देवमुखादग्नेः स्वेन दत्ताहुतिभ्यो निमित्तेभ्यो हिरण्यशरीरः 'सम्भूय' भूत्वा 'ऊर्ध्वः' ऊर्ध्वगतिस्सन् स्वर्गं लोकमेतीति श्रुत्यर्थः। एवं शरीरस्य भूतत्रयात्मकत्वेऽपि 'इमास्तिस्रो देवताः पुरुषं प्राप्य' (छां.६.४.७.) इत्यादिश्रुतिरुदाहर्तव्या। 'इमाः' तेजोऽबन्नात्मिकाः तिस्रो देवताः।

**अतो ब्रवीति –**

## सू.–ॐ ॥ मांसादिभौमं यथाशब्दमितरयोश्च ॥ ॐ ॥ २२ ॥

**'यत् कठिनं सा पृथिवी यद् द्रवं तदापो यदुष्णं तत् तेजः' (गर्भ.३.) इति श्रुतेर्मांसाद्येव भौमं, न सर्वशरीरम्। अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यम्।**

---

१.'अनेन कार्यस्य कारण एवाप्ययनियमादेतच्छ्रुतेः काठिण्यगन्धवत्त्वादियुक्तेश्च शरीरं पार्थिवमित्यपरः पूर्वपक्षः प्रदर्शितो भवति।' ख.

सिद्धान्तयत् सूत्रमवतार्य व्याचष्टे-**अत इति** ॥ यतोऽनेकधा विरुद्धश्रुतिरस्ति। यतश्च देहस्य भूतत्रयात्मकत्वश्रुतेः एकैकभूतोपादानकत्वश्रुतिविरोधेनाप्रामाण्ये तन्न्यायेन जगत्कारणत्वश्रुतेरप्यप्रामाण्यान्न तथा विष्णोर्जगत्कारणतासिद्धिः, अतस्तन्निराकरणार्थं सिद्धान्तमाह - सूत्रकार इत्यर्थः। इति श्रुतेरित्यनेन यथाशब्दमिति या श्रुतिः सूचिता, यच्च श्रुतेरङ्गीकारहेतुत्वं सूचितं तद्विवृतं भवति। तेन विपक्षे श्रुतिविरोध उक्तः। ग्रहणे 'यत्कठिनं' मांसादि सा पृथिवी। 'यद्द्रवं' शोणितादि तदापः। 'यदुष्णं' मज्जादि तत्तेज इति श्रुत्यर्थः। मांसादीति शोणितादिमज्जादीत्यनयोरुपलक्षणम्। अत एव टीकायां शरीरेऽस्ति शोणितमज्जादीत्युक्तम्। तत्र प्रत्येकमादिशब्दान्वयः। अस्थिशोणितेत्यपपाठः। सूत्रे मध्यमधातुजन्यत्वेन मांससमयोः शोणितमज्जयोरेव ग्राह्यत्वात्, अस्तीति क्रियापदस्यैव अपेक्षितत्वाच्च। तत्र प्रथमादिशब्देन मनःपुरीषयोर्ग्रहणम्। द्वितीयेन मूत्रप्राणयोः, तृतीयेनास्थिवाचोर्ग्रहणम्। एवेत्यनेन पूर्वसूत्रादेवार्थस्य तुशब्दस्यानुवृत्तिस्सूचिता। चार्थो वा एवकारः। भौममित्येतद् आप्यं तैजसमित्यनयोरुपलक्षणम्। अत्र सर्वत्र तत्त्वप्रदीपोदाहृता सूत्रे यथाशब्दमित्यनेन सूचिता भाष्ये श्रुतेरित्यनेनोपलक्षिता टीकायामपि यथाशब्दत्वादित्यनेनोक्ता 'अन्नमशितं त्रेधा विधीयते तस्य यस्स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमः तन्मांसं योऽणिष्ठस्तन्मनः' (छां.६.५.१.) इति तथा 'अन्नमयं हि सोम्य मनः' (छां.६.६.५.) इति छन्दोगे पुरीषमांसमनसां पार्थिवत्वश्रुतिः, एवम् 'आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुः तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठस्स प्राणः' (छां.६.५.२.) इति तथा 'आपोमयः प्राणः' (छां.६.६.५.) इति मूत्रशोणितप्राणानामाप्यत्वश्रुतिः, एवं 'तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक्' (छां.६.५.३.) इति तथा 'तेजोमयी वाक्' (छां.६.६.५.) इति चास्थिमज्जावाचां तैजसत्वश्रुतिश्च ज्ञापिकेति ध्येयम्। मांसाद्येवेत्यस्य व्यावर्त्यं दर्शयति - **नेति** ॥ भौममित्यनुषज्यते।

तर्हि शरीरे किमन्यदस्तीत्याशङ्कायां प्रवृत्तमितरयोरित्येतद्व्याचष्टे - **अप्तेजसो-**

**रिति ॥** इदं च भूमितेजसोः भूमिजलयोरित्यनयोरुपलक्षणम् । 'कार्यं' शोणितादि मज्ज्ञादि च । कार्यमित्यनन्तरं शरीरेऽस्तीति शेषः । अत एव टीकायामस्ति शोणितमज्ज्ञादीत्युक्तम् । इतिशब्दोऽध्याहार्यः । अनेन सूत्रे कार्यमित्यादेः शेषो दर्शितः । न केवलं शरीरे भौमं मांसाद्येवास्ति, किं तर्हि अप्तेजसोश्च कार्यमस्तीति समुच्चये चशब्दः । यथाशब्दमित्येतत्क्रियाविशेषणमव्ययमिति भावेन अङ्गीकार्यमिति क्रियाध्याहारेण तद्योजितम् । शब्दमनतिक्रम्य श्रुत्यनुसारेणेति तदर्थः । यद्वा - ननु कथं मांसस्य पार्थिवत्वमुच्यते 'आपो वाव मांसम्' (कौण्डिन्य.) इति श्रुत्या तर्पकत्वयुक्त्या च विरोधादित्यत आह - **अप्तेजसोश्चेति ॥** अत एव तत्त्वप्रदीपे मांसादि भौममुक्तमित्येतावता भौममेवेति नाऽशङ्क्यं, किन्त्वप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यमिति अप्तेजसोश्चेति भाष्यं प्रकारान्तरेणावतारितम् । अस्मिन् पक्षे नावधारणान्वयः, किन्तु 'मांसादि भौमं' न केवलं भौमं, किं तर्हि तत्राप्तेजसोश्च कार्यमङ्गीकार्यमित्यन्वयः । तथा च मांसादीनाम् अनेकभूतात्मकत्वाङ्गीकारान्न श्रुतियुक्तिविरोध इति भावः ॥

**'यद् वावाथो विमिश्रं मिश्राद्ध्येतद् भवति मिश्राणि हि भूतानि तस्मादेवैवमाचक्षते '[1]भूतानि' इति हि काषायणश्रुतिः ।**

मांसादीनामनेकभूतकार्यत्वाङ्गीकरणं शब्दानुसारीत्युक्तम्, कोऽसौ शब्द इत्यतस्तं दर्शयति- **यदिति ॥** वावेत्येवार्थे । हिः प्रसिद्धौ हेतौ च । तथा च 'यत्' यस्माद् विमिश्राणि भूतानीति प्रसिद्धम्, 'अथो' तस्माद् यच्छरीरे मांसादि तदपि विमिश्रमेव स्यात् । न चाप्रयोजकता हेतोः, हि यस्मात् 'एतत्' मांसादि 'विमिश्रात्' भूम्यादेर्भवति 'अथो' तस्मात् कार्यस्य कारणानुरूपत्वादिति भावः ।

ननु भूतानां विमिश्रत्वमेव कुतोऽवगतमित्यतो भूतशब्दवाच्यत्वादित्याह - **तस्मादेवेति ॥** सम्भूतत्वात् सहभूतत्वाद्विमिश्रत्वादेवेत्यर्थः । अनेन वह्निमत्त्वादेव धूमवत्त्वमित्यादाविव विमिश्रत्वादेव पृथिव्यादीनि भूतानीत्येवमाचक्षते विद्वांस

---

१. 'भूतानीति' ह.

इत्युक्त्वा विमिश्रत्वस्य व्यापकता भूतशब्दवाच्यत्वस्य तु व्याप्यता बोध्यते । तच्छब्दप्रवृत्तिनिमित्तत्वात् तस्य, तदभावे तच्छब्दप्रवृत्त्ययोगात् । वस्तुतो भूतानामादिसृष्टौ मिश्रत्वेनैव सृष्टत्वाच्चेति भावः । अत्र तत्त्वप्रदीपे विमिश्रं शरीरादि मांसादि चेति व्याख्यानेन शरीरे अप्तेजसोश्च कार्यमस्तीत्यत्रापीयं श्रुतिः प्रमाणमिति सूचनाच्छङ्कोत्तरटीका शरीरविषयतयाऽपि व्याख्येया । श्रुतिरित्यनन्तरं मांसादीनामनेकभूतकार्यत्वं शरीरस्याप्यनेकभूतात्मकत्वं वक्तीति शेषः । अनेन - यच्छरीरे मांसादि तदेव भौमम्, न सर्वशरीरं, किं तर्हि शरीरे 'इतरयोः' अप्तेजसोश्च कार्यं शोणितमज्जाद्यस्तीत्यङ्गीकार्यम् । कुतः ? यतः तदङ्गीकरणं 'यत्कठिनम्' इति 'अन्नमयम्' इति 'यद्वाव' इति च श्रुत्यनुसारि भवति अतः । अथ वा - न केवलं मांसादि भौमं, किन्तु मांसादौ 'इतरयोः' अप्तेजसोश्च कार्यमस्तीत्यङ्गीकार्यम् । कुतः ? यतो 'यथाशब्दं' तद्भवति 'यद्वाव' इति श्रुत्यनुसारि भवति अतः । यत एवमतो न मांसस्याऽप्यत्वे युक्तिविरोध इति सूत्रार्थ उक्तो भवति ।

**'पञ्चभूतात्मकं सर्वं [१]तदप्येकविवक्षया ।**
**एकभूतात्मकत्वेन व्यवहारस्तु वैदिके ॥**

मांसादीनामनेकभूतकार्यत्वात् तदपेक्षयाऽऽप्यत्वाद्युक्तिर्युक्तेत्युक्तार्थे स्मृतिं चाऽह- **पञ्चेति** ॥ यद्यपि पार्थिवादिसर्वशरीरेष्वपि मांसादिकं सर्वमेकैकशः पञ्चभूतात्मकं 'तदपि' तथाऽपि 'एकविवक्षया' एकैकभूतसम्बन्धविवक्षया 'एकभूतात्मकत्वेन' एकभूतकार्यत्वेन भौममित्यादिरूपेण [२]वैदिकवचने व्यवहारोऽस्ति ।

**भौममित्येव काठिन्याच्छौक्ल्य ादौदकमित्यपि ।**
**तेजिष्ठत्वात् तैजसं च यथाऽस्थ्नां वचनं श्रुतौ ॥'**

**इति वायुप्रोक्ते ॥ २२ ॥**

---

१. 'तथाऽप्येकविवक्षया' ह.  २. 'वैदिकग्रन्थे' ख.

एतदेव विवृणोति- **भौममित्यादिना ॥** काठिन्याच्छौक्ल्यात् ततोऽवगताद्भू-जलसम्बन्धात् 'तेजिष्ठत्वात्' अतिशयिततेजोभागवत्त्वादेकस्यैव भौममित्याद्यनेक-शब्दव्यवहारभाक्त्वं भवतीत्यर्थः । तदुदाहृत्य दर्शयति– **यथेति ॥** भौमत्वादिनेति शेषः । तत्र 'यत्कठिनम्' इति सामान्यश्रुतौ काठिन्यादवगताद् भूतसम्बन्धाद् अस्थ्नां भौमत्वेन वचनम्, 'अस्थि च भवन्त्यापः' (कौण्डिन्य.) इति श्रुतौ च शौक्ल्यादवगतादप्सम्बन्धादौदकमित्याप्यत्वेन व्यवहारः, 'तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तदस्थि भवति' (छां.६.५.३) इति श्रुतौ च तेजिष्ठ-त्वान्निमित्तादस्थिषु तैजसत्वेन वचनमिति ज्ञेयम् । इयं च योजना यत्र प्रायो भूतसाम्यं तस्मिन्नंशे एकैकभूतानूनत्वविवक्षया तत्तदात्मकत्वं श्रुतिषूच्यते इत्युक्तिनानात्वेऽप्यविरोध इति तत्त्वप्रदीपेऽपि प्रदर्शिता । अत्रास्थ्नामित्यस्थिपदेन भूतसाम्यस्थलीयास्थिग्रहणम् । तथा च भूतसाम्यस्थले काठिन्यादिनिमित्तैनैकत्रैव भौममित्याद्यनेकव्यवहारस्तस्यैवोदाहरणेन प्रदर्शनं यथाऽस्थ्नामित्यर्थः । पञ्चभूतात्मकमित्येतदेव तत्त्वप्रदीपे - एवं ग्रहणे 'यत्कठिनं' 'सा पृथिवी' इत्याद्युक्तिविरोध इत्यत आह, इत्यवतार्य मांसादिसर्वमप्येकैकशः पञ्चभूतात्मकं तत्र प्राधान्यविवक्षया भौमं मांसमित्यादिव्यवहारः ।

'सर्वं च भौतिकं मिश्रं मिश्रत्वेऽपि विशेषितम् ।
भौमं मांसमसृग्वारि तेजो मज्जा विशेषतः ॥'

इत्यादेश्चेति प्रकारान्तरेणापि व्याख्यातम् । अस्मिन् पक्षे 'एकविवक्षया' इत्यस्यैकैकभूतप्राचुर्यस्थले एकैकभूतप्राचुर्यविवक्षयेत्यर्थः । भूतसाम्यस्थले चैकैकभूतानूनत्वविक्षयेति चार्थः । 'भौममित्येव' इत्यादेश्च काठिन्यादिनिमित्तेन मांसादिषु पृथिव्यादिप्राचुर्यविवक्षया भौमत्वादिव्यवहार इत्यर्थः । अत एव तेजिष्ठत्वादिति इष्ठन्प्रत्ययेनास्थ्नि तेजोभागप्राचुर्यमवगम्यते । एतच्चोपलक्षणम्, अस्थ्नामित्यप्युपलक्षणम् । मांसादेर्भौमत्वादिवचनमित्यपि द्रष्टव्यम् । इयं च विशेषोक्तेर्गतिप्रदर्शकोत्तरसूत्रसूचिता योजना । अत एव टीकाकृता नोक्ता ।

तत्त्वप्रदीपकृता तु वक्ष्यमाणैव भाष्योदाहृतस्मृत्यर्थतयाऽपि दर्शिता। वायुप्रोक्त इत्यनन्तरमुक्तत्वादेकैकस्मिन्नेव मांसादावाप्यत्वाद्यनेकोक्तिर्युक्तेति वाक्यशेषः।

**कथं तर्हि विशेषवचनमित्यत आह -**

## सू.- ॐ ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ ॐ ॥ २३ ॥

**भूतानां तु विशेषसंयोगादेव विशेषव्यवहारः।**

यदि शरीरं नैकभूतप्रकृतिकं, कथं तर्हि विशेषोक्तिरित्युक्तार्थमाशङ्क्य तत्परिहाराय सूत्रमवतार्य व्याचष्टे – **कथमिति ॥** तर्हीति श्रवणाद् यदीति लभ्यते। यदि शरीरं नैकभूतोपादानकमिति तदर्थः। **विशेषवचनमिति ॥** आपः शरीरं, पृथिवी शरीरं, हिरण्यशरीर इति विशेषोक्तिरित्यर्थः। एवमिदमेव वाक्यं यदि मांसादिकं नैकभूतप्रकृतिकं, कथं तर्हि भौमं मांसमित्यादिविशेषव्यवहार इत्यप्यवतारणीयम्। **भूतानामिति ॥** पृथिव्यादिभूतानां पार्थिवादिशरीरेषु मांसादिषु च 'विशेषसंयोगात्' सम्बन्धाधिक्यात् तदपेक्षयैव 'विशेषव्यवहारः' पार्थिवमाप्यमित्यादिविशेषोक्तिरित्यर्थः। न तु एकैकभूतात्मकत्वादित्येवार्थः। उपपद्यते यत इति शेषः। अस्यातो न विशेषोक्तिविरोध इति लब्धसाध्येनान्वयः।

अनेन – सूत्रे तुरेवार्थः। तच्छब्दो वैशेष्यपरः। वैशेष्यशब्दश्च स्वार्थे [१]ष्यञन्तो वा विशेषिणां भाव इति भावे ष्यञन्ते वा भूतानां धर्मिणां विशेषसंयोगपरः। पञ्चमी ल्यब्लोपनिमित्तेति सूचितम्। तथा च यतः 'तद्वादः' आपः शरीरम्, आपो वाव मांसमित्यादिविशेषोक्तिः 'वैशेष्यात्तु' भूतानां धर्मिणां संयोगाधिक्यमपेक्ष्यैवोपपद्यते, अतो न शरीरस्य मांसादेर्वा नैकभूतोपादानकत्वे तद्विरोधः शङ्क्य इति सूत्रार्थ उक्तो भवति।

**'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता।**
**इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः॥**

१. 'ष्यञन्तो विशेषिणां' क.

**इति सामान्यतो ज्ञेयं [1]भेदश्च प्रतिपूरुषम् ।**
**स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतम् ॥'**

**इति च [2]बृहत्संहितायाम् ।**

ननु शरीरे मांसादिषु वा भूतानां विशेषसंयोग एव कुतः ? सर्वशरीरेषु सर्वभूतानां विशेषसंयोगभावे च पुनः एकैकभूतप्राचुर्यविवक्षया पार्थिवादिविशेषोक्त्ययोग इत्यत आह – **पार्थिवानामिति ॥** [3]पृथिवीस्थितानां स्थलजानां शरीराणाम् 'अर्धेन भागेन पृथिवी स्मृता' तेष्वर्धं पृथिवीभाग इत्यर्थः । तेषामर्धादितरस्मिन् अर्धे 'त्रिभागिन्य आपः' त्रयोऽब्भागाः, तत्र स्मृता इति यावत् । 'भागतस्तु तेजो'

---

१.'भेदं च' ह. २.'ब्रह्मसंहितायाम्' ह.

३. अत्र प्रथमश्लोके पूर्वार्धस्याऽप्यशरीरेषूहः कर्तव्यः । तृतीयपादस्योभयत्रान्वयः । 'इतरेऽर्धे त्रिभागिन्यः' इति स्वर्गशरीरेऽपि बोद्धव्यमिति तत्त्वप्रदीपोक्तेराप्येषूहः कर्तव्यः । चतुर्थपादस्योभयत्रान्वयः । स्वर्गस्थेषूहः । तथा च पार्थिवानां पृथिवीस्थितानां शरीराणामर्धेन पृथिवी स्मृता । तेष्वर्धं पृथिवीभाग इत्यर्थः । एवं जलजानामन्यशरीराणामर्धं तेजः पार्थिवानां शरीराणां च इतरेऽर्धे त्रिभागिन्य आपः आप्यानामितरेऽर्धे त्रिभागिनी पृथिवी पार्थिवानां जलजानां चेतरेऽर्धे भागतस्तेज उदाहृतम् । स्वर्गस्थानां शरीराणामितरेऽर्धे भागतः पृथिव्युदाहृता इत्येवं सामान्यतः पार्थिवाप्यतैजसशरीरेषु भूतानां संयोगविशेषोऽस्तीति ज्ञेयमिति योजना ।

एवं शरीरे भूतानां संयोगविशेषं प्रमाणेनाभिधाय विशेषोक्त्ययोगदोषं तच्छेषेण परिहरति – भेदश्चेति ॥ चो यतः प्रतिपूरुषं पार्थिवादिप्रतिशरीरं शरीरभेदेनेति यावत् । भेदः पृथिव्यादिभूतानां तत्रतत्र संयोगविशेषोऽङ्गीक्रियतेऽतो विशेषोक्त्ययोगलक्षणदोषो न इत्यर्थः । केचित्तु भेदस्तु प्रतिपूरुषमित्यस्य पार्थिवशरीर एव बहुजलं पिबति । तत्रेतरेऽर्धे 'त्रिभागिन्य आपः' इत्युक्तापेक्षया जलं किञ्चिदधिकमाप्यशरीर एव यस्त्विति तपस्वी तत्रार्धात् किञ्चिन्न्यूनमित्यर्थमाहुः । अन्ये तु प्रतिपूरुषं पुरुषविशेषं प्रति भेदो विशेषोऽस्ति यदा देवामानुषाद्यवतारं कुर्वन्ति तदाऽपि तेजोभागस्यैव किञ्चिदाधिक्यमित्यादिविशेषो द्रष्टव्य इति वर्णयन्ति । बृहत्संहितायामुक्तमिति शेषः । अस्य विशेषसंयोगादेवेति पूर्वेणान्वयः ।

इति वाक्यविन्यासः 'ख.' मातृकायां दृश्यते ।

भागमात्रं तेजः एकस्तत्र तेजोभाग इत्यर्थः। स्मृत इति विपरिणामेनानुषज्यते। एवं सामान्यतः पार्थिवाप्यशरीरेषु सर्वेष्वपि स्वस्वभागचतुष्टयमस्तीति ज्ञेयम्। अयं विशेषो न पार्थिवादिषु नियतः, किन्तु सर्वत्र नियत इत्याह - **भेदश्चेति ॥** विशेषसंयोग इत्यर्थः। 'प्रतिपूरुषं' पार्थिवादिप्रतिशरीरं सर्वशरीरेष्वपि नियत इत्यर्थः। तथा च पार्थिवादिदेहभेदेन तत्तद्भूतविशेषसंयोगस्य प्रमाणोक्तत्वात् न तस्यासिद्धिः, न वा तद्भावपक्षोक्तदोष इति भावः। तैजसशरीरेष्वेतं विशेषमाह- **स्वर्गस्थानामिति ॥** 'इतरेऽर्धे त्रिभागिन्य आपः' इति स्वर्गशरीरेऽपि बोद्धव्यमिति तत्त्वप्रदीपोक्तेः 'इतरेऽर्धे त्रिभागिन्य आपः' इत्यत्राप्यनुषञ्जनीयम्। तथा तेजःपदस्थाने पृथिवीपदं प्रक्षिप्य पृथिवी भागत इत्येतदपि। तथा च अर्धं तेजः इतरेऽर्धे त्रिभागिन्य आपः पृथिवी तु भागतः [१]उदाहृता इत्यर्थः। एवं जलजानां शरीरेष्वर्धमापः इतरेऽर्धे त्रिभागिनी पृथिवी भागमात्रं तेज इत्यपि द्रष्टव्यम्। 'बृहत्संहितायां' वचनादिति शेषः। अस्य विशेषसंयोगादेवेति पूर्ववाक्येनान्वयः।

**सर्वाध्यायार्थावधारणार्थाऽध्यायान्ते द्विरुक्तिः।**

ननु किमर्थेयं सूत्रपदे द्विरुक्तिः। अध्यायसमाप्तिज्ञापनार्थमिति चेत्, तस्या अर्थभेदेन ज्ञातुं शक्यत्वात्। अन्यथा पादान्तेऽपि तत्प्रसङ्गादित्यतो द्विरुक्तेः [२]प्रयोजनं दर्शयति – **सर्वेति ॥** सर्वो योऽयमध्यायार्थः तस्यैवमेवेत्यवधारणं निश्चयस्तदर्थः प्रयोजनं यस्याः सा तथोक्ता। 'द्विरुक्तिः' द्विर्वचनम् 'अध्यायान्ते' सर्वाध्यायान्तिम-सूत्रे। पदस्य क्रियते इति शेषः।

**गारुडे च– 'अध्यायान्ते द्विरुक्तिः स्याद् वेदे वा वैदिकेऽपि वा।**
**विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे ॥**

उक्तमेव किमर्थमुच्यत इत्यतोऽनुक्तमपि प्रयोजनं प्रमाणविशेषेणाऽह- **गारुडे चेति ॥** पूर्वाध्यायोक्तस्मृतिसमुच्चये, न केवलमस्माभिः, किन्तु गारुडे चेति समुच्चये वा चशब्दः। 'अध्यायान्ते' अध्यायान्तिमसूत्रेषु पदस्येति शेषः। 'वैदिके' वेदानु-सारिषु। अपिः समुच्चये। वावेति निपातौ नियमसूचकौ। भागवतादावुक्तनियमस्य

१. 'भवतीत्यर्थः' क.   २. 'पार्थिवमित्यादिप्रयोजनं' क.

व्यभिचारमाशङ्क्याऽह **विचार इति** ॥ व्यापकधर्मनिर्णयहेतुव्याप्यधर्मनिश्चय इत्यर्थः । यथोक्तं 'जिज्ञासा धर्मनिर्णयः' इति । यद्वा – पूर्वोत्तरपक्षबलाबल-चिन्तेत्यर्थः । 'यत्र' यस्मिन् ग्रन्थे 'सज्येत' सम्बध्येत, येन क्रियेत इति यावत् । तत्राध्यायान्त इति पूर्वेणान्वयः । **पूर्वोक्तस्येति** ॥ अध्यायादिमारभ्योक्तार्थस्येत्यर्थः 'अवधारणे' अवधारणार्थम् ।

**अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् ।**
**विनिन्द्य चेतरान् मार्गान् सम्पूर्णफलता तथा ॥'** इति च ॥

**॥ इति मांसाधिकरणम् ॥ १३ ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रभाष्ये*
*द्वितीयाध्यायस्य चतुर्थः पादः ॥*

## ॥ द्वितीयाध्यायस्समाप्तः ॥

उक्तमुक्त्वा द्विरुक्तेः पूर्वानुक्तं [१]प्रयोजनविशेषमाह – **अनुक्तानामिति** ॥ सूत्रपदैर्मुखतोऽनुक्तानामित्यर्थः । सूचितानामिति यावत् । 'स्वीकारः' सङ्ग्रहो द्विरुक्तेरिति शेषः । प्रयोजनविशेषान्तरमाह - **विनिन्द्येति** ॥ 'इतरान्' सूत्रतदनुकूलेतरान् 'मार्गान्' ज्ञानोपायान् तथाविधानि शास्त्राणि 'विनिन्द्य' विषयादिशून्यत्वेनानुपादेयानीति गर्हयित्वाऽनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेदित्यन्वयः । अनेन इतरनिन्दनाख्यं प्रयोजनं सूचितम् । द्विरुक्तेः प्रयोजनविशेषान्तरं चाऽह – **सम्पूर्णेति** ॥ विशिष्टमोक्षसाधनतेत्यर्थः । तथाशब्दः समुच्चये । शास्त्रोस्योक्ता भवतीति शेषः । इति गारुडे इत्यन्वयः । अस्य सर्वाध्यायेत्यादिनोक्त-मुक्तमित्यध्याहृतेनान्वयः ।

**॥ इति मांसाधिकरणम् ॥ १३ ॥**

**॥ इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां**
**श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्नाथयतिना कृतायां**
**श्रीमद्ब्रह्मसूत्रभाष्यदीपिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥**

---

१. 'प्रयोजनविशेषं चाऽह' ख.

॥ श्रीः ॥

श्रीजगन्नाथयतिकृता

# सूत्रदीपिका

## द्वितीयाध्यायस्य प्रथमः पादः

॥ स्मृत्यधिकरणम् ॥ १ ॥

### १. ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ

यतः **स्मृत्यनवकाशदोषप्रसङ्गः** स्मृतीनां पाशुपतादिरूपाणां अनवकाशेन विष्णुजगत्कर्तृत्वादौ निरवकाशत्वेन श्रुतीनां विष्णुकारणातापरत्वे तद्विरोधेन दोषप्रसङ्गः अप्रामाण्याख्यदोषप्राप्तिरस्ति । अतः न श्रुतीनां विष्णुकारणतापरत्वं युक्तम् । किन्तु शिवादिकर्तृतापरत्वमेव युक्त**मिति चेन्न** । कुतः? **अन्यस्मृत्यनवकाशदोषप्रसङ्गात्** पाशुपतादिभ्यो अन्यासां श्रुतिसंवादित्वेन रुद्राद्यपेक्षया सर्वज्ञतमविष्ण्वादिप्रणीतत्वेन च इतरस्मृतिभ्यः प्रबलानां पञ्चरात्रादिस्मृतीनां अनवकाशेन रुद्रादिजगत्कर्तृत्वादौ निरवकाशेन तद्विरुद्धशैवादिस्मृतीनां । दोषप्रसङ्गात् अप्रामाण्याख्यदोषेण प्रकर्षेण सम्बन्धाङ्गीकारेण तद्विरोधस्याकिञ्चित्करत्वादित्यर्थः ॥ १ ॥

### २. ॐ इतरेषां चानुपलब्धेः ॐ

अनुपलब्धेरित्यावर्तते । **चशब्दः** किञ्चित्फलोपलब्ध्यङ्गीकारसूचकः । तथाचा**नुपलब्धेः** अतीन्द्रियात् । **इतरेषां** भिन्नानां प्रत्यक्षयोग्यानां पाशुपताद्युक्तफलानाम् अनिष्टानां च तदुक्तक्रियानुष्ठानपरित्यागयोः कृतयोरप्य**नुपलब्धेः** प्रत्यक्षतोऽदर्शनात् तासामप्रामाण्यमेव युक्तमित्यर्थः ॥ २ ॥

## ३. ॐ एतेन योगः प्रत्युक्तः ॐ

**एतेन** फलादर्शनलक्षणपूर्वोक्तहेतुनैव **योगः** योगशास्त्रम् । **प्रत्युक्तः** निरस्त-मित्यर्थः ॥ ३ ॥

॥ न विलक्षणत्वाऽधिकरणम् ॥ २ ॥

## ४. ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ

**अस्य** श्रुतितदनुसारिस्मृत्यादेः न शैवादिस्मृतिवदप्रामाण्यम् । कुतः **विलक्षणत्वात्** स्वतः प्रामाण्याख्येतरवैलक्षण्यात् । किञ्च श्रुतेर्नित्यत्वाख्यवैलक्षण्यवत्त्वात् । स्मृतेः श्रुत्यनुसारित्वाख्यवैलक्षण्यवत्त्वाच्च नाप्रामाण्यं **तथात्वं च** उक्तवैलक्षण्यवत्त्वं च । **शब्दात्** 'वाचा विरूप नित्यया'[१] इत्यागमान्निश्चित-मित्यर्थः ॥ १ ॥

## ५. ॐ दृश्यते तु ॐ

तुशब्दो विशेषार्थे । यतः तत्फलयोग्याधिकारिविशेषाणां श्रुत्याद्युक्तं फलं **दृश्यते** उपलभ्यते । अतो नाप्रामाण्यमित्यर्थः ॥ २ ॥

॥ अभिमान्यधिकरणम् ॥ ३ ॥

## ६. ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ

तुशब्दोऽवधारणे । **अभिमानिव्यपदेशः** मृदब्रवीदित्यादौ अभिमानिनश्चेतनस्यैव व्यपदेशः उक्तिः न त्वचेतनस्य । कुतः? मृन्न वक्त्री जडत्वादिति युक्तिविरुद्धत्वात् । तथा च न वेदाप्रामाण्यम् । नन्वभिमानिनः विदेहत्वायोगेन सदेहत्वे तस्यादर्शनम् अन्यवस्त्वधिष्ठानेन वक्तृत्वम् अनेकाभिमन्यमानाधिष्ठातृत्वं चेत्यादिकं कथं युज्यत इत्यत उक्तम्–**विशेषेत्यादि** । **विशेषः** सामर्थ्यम् । **अनुगतिः** सर्वाभिमन्यमानव्याप्तिः । ताभ्यां सर्वं युज्यत इत्यर्थः ॥ १ ॥

---

१. (ऋ.८–६४–६)

## ७. ॐ दृश्यते च ॐ

अभिमानिदेवतायां सामर्थ्यं योगिभिः उपलभ्यते च। अतोऽपि नादर्शनविरोध इत्यर्थः ॥ २ ॥

॥ असदधिकरणम् ॥ ४ ॥

## ८. ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ

**असत्** विश्वप्रागभाव एव। जगत्कर्तृ नेश्वर **इति चेन्न**। कुतः? **प्रतिषेधमात्रत्वात्** अभावधर्मात्मतामन्तरेण स्वरूपत एव निषेधबुद्धिविषयत्वादित्यर्थः ॥ १ ॥

## ९. ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ

**अपीतौ** प्रलये । **तद्वत्प्रसङ्गात्** । असन्मात्रवत्त्वप्रसङ्गात् । असत्कर्तृत्वं **असमञ्जसं** अयुक्तमित्यर्थः ॥ २ ॥

## १०. ॐ न तु दृष्टान्तभावात् ॐ

तुशब्दोऽवधारणे। प्रलये सर्वासत्त्वं न युज्यते। कुतः? तदा सर्वपदार्थसत्त्व एव **दृष्टान्तस्य भावात्** सद्भावादित्यर्थः ॥ ३ ॥

## ११. ॐ स्वपक्षदोषाच्च ॐ

**स्वपक्षे** प्रलये सर्वासत्त्वपक्षे। **दोषात्** दृष्टान्ताभावाख्यदोषाच्च न तत्पक्षो युक्त इत्यर्थः ॥ ४ ॥

## १२. ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ

**तर्काप्रतिष्ठानात्** दृष्टान्ताभावादिरूपतर्कस्याप्रतिष्ठानात् अव्यवस्थितत्वात्। **अन्यथापि** सिद्धान्त्युक्तप्रकारात्। अन्यरूपेणापि प्रतितर्केण**ानुमेयं** साधनीय-

**मिति चेत्** । नेति शेषः । कुतः? **एवमपि** एवं सति तर्कमात्रस्याप्रामाण्ये सति । **अनिर्मोक्षप्रसङ्गः** सर्वसिद्धान्तिभिः स्वस्वशास्त्रप्रयोजनत्वेनाङ्गीकृतस्यापि मोक्षस्यापि लोपप्रसङ्गः । कुतः? तस्य विप्रतिपन्नं प्रति अनुमानेनैव साधनीयतया तस्याप्येवमप्रामाण्योक्तिसम्भवादित्यर्थः ॥ ५ ॥

## १३. ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ

**एतेन** स्वपरपक्षयोः दृष्टान्तभावाभावाख्यहेतुना । **अपरिग्रहाः** वेदपरिग्रहशून्याः । तद्विरुद्धाश्च । **शिष्टाः** अवशिष्टाः जीवकालस्वभावकर्तृत्वपक्षा **अपि** । **व्याख्याताः** प्रत्याख्याताः दूषिता इत्यर्थः ॥ ६ ॥

१४. भोक्त्रधिकरणम् ॥ ५ ॥

## १४. ॐ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॐ

**भोक्त्रापत्तेः** यस्माद्भोक्तुः जीवस्य 'परेऽव्यये सर्व एकीभवन्ति'[1] इति वाक्ये ब्रह्मभावापत्तेः श्रवणात् । तयोर**विभागः** भेदाभावः । तस्मादल्पजीवाभिन्नब्रह्मणः जगत्कारणत्वं न युक्तमिति **चेत्** । नेति शेषः । कुतः? यतः **लोकवत्** यथा लोके जले जलान्तरस्यैकीभावोक्तिस्तथाऽत्रापि स्थानैक्याद्यालम्बनेन जीवेशयोः एकीभवन्तीत्यैक्योक्तिः **स्यात्** उपचरिता भवेत् । अतो नोक्तदोष इत्यर्थः ॥ १ ॥

॥ आरम्भणाधिकरणम् ॥ ६ ॥

## १५. ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ

**तदनन्यत्वं** तस्य स्वतन्त्रकारणस्य ब्रह्माभिन्नत्वं वाच्यम् । कुतः **आरम्भणशब्दादिभ्यः** आरम्भणे फलोपलक्षितकिंस्विदासीदि[2]त्यधिष्ठानाद्याक्षेपकवाक्यात् स्वातन्त्र्यादियुक्तिभिश्चेत्यर्थः ॥ १ ॥

---

१. 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' (मुं.३–२–७)

२. 'किंस्विदासीदधिष्ठानमारम्भणं कतमस्त्वित्कथाऽऽसीत्' (ऋ.१०–८१–२)

## १६. ॐ भावे चोपलब्धेः ॐ

यतः ईश्वरान्यस्वतन्त्रसाधनस्य **भावे** सत्त्वे । **उपलब्धेः** दर्शनस्य । प्रसङ्ग इति शेषः । अतोऽपि नास्त्यन्यत् स्वतन्त्रसाधनमित्यर्थः ॥ २ ॥

## १७. ॐ सत्वाच्चावरस्य ॐ

चोऽवधारणे । **अवरस्य** अस्वतन्त्रसाधनस्य **सत्त्वादेव** 'अद्भ्यः सम्भूतः'[१] इति वाक्यं तत्परं भवतीति न तद्विरोध इत्यर्थः ॥ ३ ॥

## १८. ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ

**असद्व्यपदेशात्** 'नासदासीत्' इत्यन्यस्यासत्त्ववचनात् । अन्यसत्त्वं न युक्तमिति चेन्न । कुतः? यतः तन्निषेधः **धर्मान्तरेणा**स्वातन्त्र्यादिधर्मविशेषेण युज्यते । कुत एतत् **वाक्यशेषात्** । 'तम आसीत्'[२] इत्यवशिष्टवाक्यशेषा-दित्यर्थः ॥ ४ ॥

## १९. ॐ युक्तेः शब्दान्तराच्च ॐ

प्रलये **युक्तेः** लीलया दण्डमवष्टभ्य गन्तुः पङ्गुत्वाभाववत् भगवतोऽपि लीलया स्वाधीनसाधनावलम्बस्य युक्तत्वात् । **शब्दान्तरात्** । तस्माच्छक्तोऽपीत्या-गमविशेषाच्च उक्तं युक्तमित्यर्थः ॥ ५ ॥

## २०. ॐ पटवच्च ॐ

**पटसृष्टिवच्च** विश्वसृष्टिरपि कर्तृभिन्नसाधनान्तरसाध्येत्यर्थः ॥ ६ ॥

## २१. ॐ यथा प्राणादिः ॐ

**यथा प्राण**देहेन्द्रियादिकं न स्वतन्त्रम् । एवं प्रकृत्यादिसाधनान्तरमपीत्यर्थः ॥ ७ ॥

---

१. 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' (तै.आ.३–१३)    २. (ऋ.१०–१२९–३)

॥ इतरव्यपदेशाधिकरणम् ॥ ७ ॥

## २२. ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ

इति यदि तर्हीति च शेषः। **इतरव्यपदेशात्** 'जीवाद्भवन्ति' इति श्रुतावुक्तत्वात्। स एव कर्ता नेश्वर इति यदि तर्हि **हिताकरणादिदोषप्रसक्तिः** जीवनिष्ठयोः हितानाचरणाहिताचरणयोर्दोषत्वाप्रसङ्गः। जीवस्य स्वतन्त्रत्वात् ते न स्यातामिति भावः। विद्येते च ते जीवे तस्मान्न जीवः स्वतन्त्रकर्तेत्यर्थः ॥१॥

## २३. ॐ अधिकन्तु भेदनिर्देशात् ॐ

तुशब्दः जीवसाम्यव्यावर्तकः। ब्रह्म तु जीवापेक्षया **अधिकम्**। कुतः? 'श्रोता मन्ता'[1] इत्यादौ श्रोतृत्वादिरूपविशेषस्योक्तत्वादित्यर्थः ॥ २ ॥

## २४. ॐ अश्मादिवच्च तदनुपपत्तिः ॐ

चशब्दोऽपिशब्दार्थः। **अश्मादिवत्**। पाषाणादेरिव। अपि जीवस्य चेतनत्वेऽपि। **तदनुपपत्तिः** अस्वातन्त्र्यात् स्वतः कर्तृत्वानुपपत्तेरित्यर्थः ॥ ३ ॥

## २५. ॐ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॐ

**उपसंहारदर्शनात्** जीवेनाऽरब्धकार्यस्य समापनदर्शनात्। स एव कर्तेति उक्तब्रह्मकर्तृत्वं नेति **चेन्न**। कुतः? हि यस्मात्। **क्षीरवत्** गोषु दृश्यमानक्षीरस्य यथा मुख्यप्राणकर्तृत्वं तथा जीवकृतोपसंहारोऽपि परमात्मकृत एवेत्यर्थः। हिशब्देनात्रार्थे 'अन्नम्' इति प्रमाणप्रसिद्धिश्च सूचिता ॥ ४ ॥

## २६. ॐ देवादिवदपि लोके ॐ

एवम्भूतेश्वरस्यापि **देवादिवत्** अदर्शनं युज्यते। कथमेतदित्यत उक्तम्—**लोक** इति। **लोके** जगति पिशाचादीनामपि अदृश्यत्वादिशक्तिर्दृष्टा। सर्वेश्वरस्य तु किं वाच्यमित्यर्थः ॥ ५ ॥

---

१. '**श्रोता मन्ता** द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता सर्वेषां भूतानामन्तरपुरुषः' (ऐ.आ.३–२–४)

## २७. ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ

**वा**शब्दः पक्षभेदेन दोषापादनसूचकः । जीवस्य स्वतःकर्तृत्वे सर्वकात्स्न्र्येन प्रवर्तने चाङ्गीकृते **कृत्स्नप्रसक्तिः** तृणादानादिसर्वकार्येष्वपि सर्वसामर्थ्य-प्रवृत्तिप्रसङ्गः । तत्परिहाराय एकदेशेन प्रवृत्त्यभ्युपगमे च **निरवयवत्वशब्द-कोपः** । 'नित्यो निरवयव'[1] इति श्रुतिविरोधः स्यादित्यर्थः ॥ ६ ॥

॥ श्रुतेस्तु शब्दमूलत्वाधिकरणम् ॥ ८ ॥

## २८. ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ

ईश्वरकर्तृत्वपक्षे तु कृत्स्नप्रसक्तिरित्यादिना जीवकर्तृत्वपक्षोक्तयुक्तिविरोध-दोषो नास्ति । कुतः? **श्रुतेस्तु** 'योऽसौ विरुद्धः'[2] इति श्रुतेरेव । नन्वेतावता कथं युक्तिविरोधशान्तिरित्यत उक्तम्– **शब्दमूलत्वादिति** । ईश्वरतद्धर्माणां शब्दैकप्रमाणवत्वे युक्त्यविषयत्वात् न तत्र युक्तिविरोधः प्रवर्तते । जीवे तु न तथा । तस्य प्रमाणान्तरेणापि गम्यत्वादित्यर्थः ॥ १ ॥

## २९. ॐ आत्मनि चैवं विचित्राश्च हि ॐ

आद्यश्चशब्दोऽवधारणे । द्वितीयः समुच्चये । **हि**शब्दः प्रसिद्धौ । तथा च **हि**शब्दात् । **आत्मनि** ईश्वर एव । **एवं** सकलयुक्तिविरोधनिरासकाः **विचित्राः** अचिन्त्याः 'विचित्रशक्तिः'[3] इति श्रुतिप्रसिद्धाः शक्तयः सन्ति न जीवे । तस्माच्च जीवपक्ष एव युक्तिविरोधः नेश्वरपक्ष इत्यर्थः ॥ २ ॥

## ३०. ॐ स्वपक्षदोषाच्च ॐ

---

१. 'अथ यस्स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थः' (भाल्लवेयश्रुतिः)

२. '**योऽसौ विरुद्धो**ऽविरुद्धो मनुमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः सपरः परमात्मा' (पैङ्गिश्रुतिः)

३. '**विचित्रशक्तिः** पुरुषः पुराणो न चान्येषां शक्तयस्तादृशास्स्युः ।
एको वशी सर्वभूतान्तरात्मा सर्वान् देवानेक एवानुविष्टः' (श्वेताश्वरश्रुतिः)

चोऽवधारणे । तथाच 'ये दोषाः'[१] इति श्रुतौ जीवपक्षे युक्तिविरोधस्य दोषस्यैवोक्तेः नासावदोषतां नेतव्यः । किन्तु ईश्वरपक्ष एव अदोषतां नेतव्य इत्यर्थः ॥ ३ ॥

## ३१. ॐ सर्वोपेता च तद्दर्शनात् ॐ

यतः परमात्माख्यदेवता न केवलं सामान्यतो विचित्रशक्तिमती । किन्तु **सर्वोपेता** सर्वविषयसार्वकालिकशक्तिमती **च** । कुतः? **तद्दर्शनात्** 'सर्वैर्युक्ता'[२] इति तथा श्रुतेः । अतो नेश्वरे युक्तिविरोधः शङ्कनीयः इत्यर्थः ॥ ४ ॥

## ३२. ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ

नेत्यावर्तते । **विकरणत्वात्** 'अपाणिपादः'[३] इति श्रुत्या ईश्वरस्य हस्तादीन्द्रियशून्यत्वावगमात् । **नेति चेत्** ईश्वरस्य कर्तृत्वं न युक्तमिति चेन्न । कुतः? यस्मात् **तदुक्तं** तस्मिन्न तस्येत्याद्यागमेन तत्करणराहित्यस्य प्राकृतेन्द्रियविषयत्वमुक्तं तस्मादित्यर्थः ॥ ५ ॥

॥ न प्रयोजनाधिकरणम् ॥ ९ ॥

## ३३. ॐ न प्रयोजनवत्त्वात् ॐ

ईश्वरस्य सृष्ट्यादौ प्रवृत्तिर्न स्वप्रयोजनोद्देशेन । कुतः? **प्रयोजनवत्त्वात्** । पूर्णानन्दत्वेन प्राप्तप्राप्तव्यत्वादित्यर्थः ॥ १ ॥

## ३४. ॐ लोकवत्तु लीलाकैवल्यम् ॐ

तुशब्द एवार्थे । **लोकवत्** लोके मत्तादिप्रवृत्तेरिवेश्वरप्रवृत्तेः । **लीलाकैवल्यं** केवललीलारूपत्वमेव न स्वप्रयोजनोद्देश्यत्वमित्यर्थः ॥ २ ॥

---

१. '**ये दोषा** इतरत्रापि ते गुणाः परमे मताः ।
न दोषः परमे कश्चिद्गुणा एव निरन्तराः ॥

२. '**सर्वैर्युक्ता** शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम् ।
नित्यानन्दा नित्यरूपाऽजरा च या शाश्वतात्मेति च यां वदन्ति ॥ (चतुर्वेदशिखा.)

३. '**अपाणिपादो** जवनो गृहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' (श्वे. ३–१९)

॥ वैशम्यनैर्घृण्याधिकरणम् ॥ १० ॥

## ३५. ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॐ

स्वातन्त्र्यसिद्ध्यर्थमीश्वरस्य जीवेभ्यः फलदाने कर्मापेक्षाङ्गीकारे निर्निमित्तं वैषम्येण फलदातुस्तस्य **वैषम्यनैर्घृण्ये** विषमत्वनिर्दयत्वे ये प्रसक्ते ते **न** स्तः। कुतः **सापेक्षत्वात्** ईश्वरस्य कर्मापेक्षावत्त्वाभ्युपगमात्। तत्कुतः? हि यस्मात्। 'पुण्येन पुण्यं'[१] इति श्रुतिः **तथा दर्शयति** प्रतिपादयति तस्मा-दित्यर्थः ॥ ३ ॥

## ३६. ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ

वैषम्यनैर्घृण्यादिदोषपरिहाराय ईशेनापेक्षणीयं यत्कर्म तन्नास्तीति विशिष्ट-निषेधः। कुतः? **अविभागात्** तस्य कर्मणः अस्वतन्त्रवस्तुभ्यः अविभक्त-त्वात्। अस्वतन्त्रत्वादिति यावत्। तथाच स्वाधीनकर्मापेक्षया वैषम्यादेर-परिहार इति **चेन्न**। कुतः? **अनादित्वात्** कर्मपरम्परायाः अनादित्वादि-त्यर्थः। तथा चेश्वरः पूर्वपूर्वमपेक्ष्योत्तरोत्तरकर्म जीवेन कारयतीत्यङ्गीकारेण कर्मणः अपेक्षणीयत्वापत्तेः नोक्तदोष इति भावः ॥ ४ ॥

## ३७. ॐ उपपद्यते चाप्युपलभ्यते च ॐ

ईश्वरस्य कर्मापेक्षायामप्युपपद्यते स्वातन्त्र्यं युज्यत एव। कर्मणः स्वाधीन-त्वात्। ननु पुनः स्वाधीनकर्मसापेक्षत्वकृतवैषम्यापात इत्यत उक्तम्– **उपलभ्यते चेति**। 'स कारयेत्'[२] इति श्रुत्या तादृशवैषम्यं अदोषत्वेन ज्ञायते चेत्यर्थः ॥ ५ ॥

---

१. **'पुण्येन पुण्यं** लोकं नयति पापेन पापम्' (प्र.३.७)

२. '**स कारयेत्** पुण्यमथापि पापं न तावता दोषवानीशिताऽपि।
ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानाम्' (चतुर्वेदशिखा.)

चोऽवधारणे । तथाच 'ये दोषाः'[१] इति श्रुतौ जीवपक्षे युक्तिविरोधस्य दोषस्यैवोक्तेः नासावदोषतां नेतव्यः । किन्तु ईश्वरपक्ष एव अदोषतां नेतव्य इत्यर्थः ॥ ३ ॥

## ३१. ॐ सर्वोपेता च तद्दर्शनात् ॐ

यतः परमात्माख्यदेवता न केवलं सामान्यतो विचित्रशक्तिमती । किन्तु **सर्वोपेता** सर्वविषयसार्वकालिकशक्तिमती **च** । कुतः? **तद्दर्शनात्** 'सर्वैर्युक्ता'[२] इति तथा श्रुतेः । अतो नेश्वरे युक्तिविरोधः शङ्कनीयः इत्यर्थः ॥ ४ ॥

## ३२. ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ

नेत्यावर्तते । **विकरणत्वात्** 'अपाणिपादः'[३] इति श्रुत्या ईश्वरस्य हस्तादीन्द्रियशून्यत्वावगमात् । **नेति चेत्** ईश्वरस्य कर्तृत्वं न युक्तमिति चेन्न । कुतः? यस्मात् **तदुक्तं** तस्मिन्न तस्येत्याद्यागमेन तत्करणराहित्यस्य प्राकृतेन्द्रियविषयत्वमुक्तं तस्मादित्यर्थः ॥ ५ ॥

॥ न प्रयोजनाधिकरणम् ॥ ९ ॥

## ३३. ॐ न प्रयोजनवत्त्वात् ॐ

ईश्वरस्य सृष्ट्यादौ प्रवृत्तिर्न स्वप्रयोजनोद्देशेन । कुतः? **प्रयोजनवत्त्वात्** । पूर्णानन्दत्वेन प्राप्तप्राप्तव्यत्वादित्यर्थः ॥ १ ॥

## ३४. ॐ लोकवत्तु लीलाकैवल्यम् ॐ

तुशब्द एवार्थे । **लोकवत्** लोके मत्तादिप्रवृत्तेरिवेश्वरप्रवृत्तेः । **लीलाकैवल्यं** केवललीलारूपत्वमेव न स्वप्रयोजनोद्देश्यत्वमित्यर्थः ॥ २ ॥

---

१. '**ये दोषा** इतरत्रापि ते गुणाः परमे मताः ।
न दोषः परमे कश्चिद्गुणा एव निरन्तराः ॥

२. '**सर्वैर्युक्ता** शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम् ।
नित्यानन्दा नित्यरूपाऽजरा च या शाश्वतात्मेति च यां वदन्ति ॥ (चतुर्वेदशिखा.)

३. '**अपाणिपादो** जवनो गृहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' (श्वे. ३–१९)

॥ वैशम्यनैर्घृण्याधिकरणम् ॥ १० ॥

## ३५. ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॐ

स्वातन्त्र्यसिद्ध्यर्थमीश्वरस्य जीवेभ्यः फलदाने कर्मापेक्षाङ्गीकारे निर्निमित्तं वैषम्येण फलदातुस्तस्य **वैषम्यनैर्घृण्ये** विषमत्वनिर्दयत्वे ये प्रसक्ते ते **न** स्तः । कुतः **सापेक्षत्वात्** ईश्वरस्य कर्मापेक्षावत्त्वाभ्युपगमात् । तत्कुतः? हि यस्मात् । 'पुण्येन पुण्यं'[१] इति श्रुतिः **तथा दर्शयति** प्रतिपादयति तस्मादित्यर्थः ॥ ३ ॥

## ३६. ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ

वैषम्यनैर्घृण्यादिदोषपरिहाराय ईशेनापेक्षणीयं यत्कर्म त**न्ना**स्तीति विशिष्टनिषेधः । कुतः? **अविभागात्** तस्य कर्मणः अस्वतन्त्रवस्तुभ्यः अविभक्तत्वात् । अस्वतन्त्रत्वादिति यावत् । तथाच स्वाधीनकर्मापेक्षया वैषम्यादेरपरिहार इति **चेन्न** । कुतः? **अनादित्वात्** कर्मपरम्परायाः अनादित्वादित्यर्थः । तथा चेश्वरः पूर्वपूर्वमपेक्ष्योत्तरोत्तरकर्म जीवेन कारयतीत्यङ्गीकारेण कर्मणः अपेक्षणीयत्वापत्तेः नोक्तदोष इति भावः ॥ ४ ॥

## ३७. ॐ उपपद्यते चाप्युपलभ्यते च ॐ

ईश्वरस्य कर्मापेक्षायामप्यु**पपद्यते** स्वातन्त्र्यं युज्यत एव । कर्मणः स्वाधीनत्वात् । ननु पुनः स्वाधीनकर्मसापेक्षत्वकृतवैषम्यापात इत्यत उक्तम्– **उपलभ्यते चेति** । 'स कारयेत्'[२] इति श्रुत्या तादृशवैषम्यं अदोषत्वेन ज्ञायते चेत्यर्थः ॥ ५ ॥

---

१. **'पुण्येन पुण्यं** लोकं नयति पापेन पापम्' (प्र.३.७)

२. **'स कारयेत्** पुण्यमथापि पापं न तावता दोषवानीशिताऽपि ।
ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानाम्' (चतुर्वेदशिखा.)

॥ सर्वधर्मोपपत्त्यधिकरणम् ॥ ११ ॥

## ३८. ॐ सर्वधर्मोपपत्तेश्च ॐ

गुणदोषाभाववत्त्वरूपाणां **सर्वेषां धर्माणां उपपत्तेः** स्वातन्त्र्यादिना ब्रह्मणि युक्तत्वाच्च न तस्य गुणपूर्णत्वे युक्तिविरोधः शङ्कनीय इत्यर्थः ॥ १ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**द्वितीयाध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥**

—०—

# द्वितीयाध्यायस्य द्वितीयः पादः

॥ रचनानुपपत्त्यधिकरणम् ॥ १ ॥

## १. ॐ रचनानुपपत्तेश्च नानुमानम् ॐ

अनुमीयत **इत्यनुमानम्** । साङ्ख्यानुमानकल्पितं प्रधानं न जगत्कर्तृ । कुतः? **रचनानुपपत्तेः** प्रधानस्य जडत्वेन स्वतः प्रवृत्त्यनुपपत्तेः । अचेतनस्य स्वतः प्रवृत्तौ प्रमाणाभावाच्चेत्यर्थः ॥ १ ॥

## २. ॐ प्रवृत्तेश्च ॐ

अहं करोमीति चेतनस्यैव **प्रवृत्तेर्दर्शनाच्च** न प्रधानं जगत्कर्तृ इत्यर्थः ॥२॥

## ३. ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ

**अपिशब्दश्चे**तनप्रवृत्त्याकर्षणार्थः । **पयोऽम्बुवत्** यथाऽचेतनयोः पयोऽम्बुनोः प्रवृत्तिर्दृष्टा तथा प्रधानस्याप्यस्त्विति **चेन्न** । कुतः? **यतस्तत्रापि** पयोऽम्बादावपि अन्ततः ईश्वरादेव प्रवृत्तिः । न स्वतः प्रवृत्तिरित्यर्थः ॥ ३ ॥

## ४. ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ

**व्यतिरेकानवस्थितेः** 'न ऋते'[1] इति श्रुत्या ईश्वरव्यतिरेकेण कस्यापि कर्मणः असत्त्वावगमात् । तत एवाचेतनस्यैव स्वतः प्रवृत्तिरिति निरीश्वर-

---

१. **'न ऋते त्वत्क्रियते** किञ्चनारे महामर्कं मघवं चित्रमर्च' (ऋ.१०–११३–९)

साङ्ख्यमतस्याप्रामाणिकत्वात् । अत एवानपेक्षत्वात् सद्भिरनादरणीयत्वान्न तद्विरोधो विष्णुकर्तृत्वस्येत्यर्थः ॥ ४ ॥

॥ अन्यत्राभावाधिकरणम् ॥ २ ॥

## ५. ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ

**तृणादिवत्** यथा पृथिवीजन्यतृणादिकार्ये पर्जन्यः सहकारिमात्रं तथा प्रकृतिजन्यमहदादिकार्येऽपीश्वरः अनुग्राहकः । न स्वतन्त्र इति सेश्वर-साङ्ख्यपक्षोऽपि **न** । कुतः? **अन्यत्राभावात्** ईश्वरादन्यत्र तत्प्रेरणां विना जगतोऽभावादीश्वरस्य प्रकृतिसत्तादिप्रदत्वाच्चेत्यर्थः ॥ १ ॥

॥ अभ्युपगमाधिकरणम् ॥ ३ ॥

## ६. ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ

नेत्यनुवर्तते । अनभ्युपगमेऽपि चार्वाकैः स्वशास्त्रस्य सिद्धान्तत्वानभ्युपगमे सिद्धमस्मदिष्टम् । **अभ्युपगमेऽपि अर्थाभावात्** सिद्धान्तत्वव्यापकयोः अर्थशब्दितविषयप्रयोजनयोः असत्वाङ्गीकारात् स्वव्याघातः स्यादिति न तत्पक्षोऽपि युक्त इत्यर्थः ॥ १ ॥

॥ पुरुषाश्माधिकरणम् ॥ ४ ॥

## ७. ॐ पुरुषाश्मवदिति चेत्तत्रापि ॐ

**पुरुषाश्मवत्** यथा पुरुषसम्बन्धादचेतनं शरीरं अश्मानयनादौ प्रवर्तते तथा अचेतनप्रकृतिः चेतनसम्बन्धात् प्रवर्तत **इति चेन्न** । कुतः यतः **तत्रापि** शरीरप्रवृत्तावपि चेतनस्य ईश्वरस्यैव कर्तृत्वे । न दृष्टान्ताभावः । अत इत्यर्थः ॥ १ ॥

## ८. ॐ अङ्गित्वानुपपत्तेः ॐ

पुरुषस्याङ्गत्वेऽङ्गीकृते सति 'अङ्गमङ्गीति' वाक्ये **अङ्गित्वस्य** प्राधान्यस्य उक्त्य**नुपपत्तेः** । न पुरुषोपसर्जनप्रकृतिकर्तृत्वपक्षे दृष्टान्तोऽस्तीत्यर्थः ॥ २ ॥

॥ अन्यथानुमित्यधिकरणम् ॥ ५ ॥

## ९. ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ

चशब्देनाङ्गित्वानुपपत्तेरित्यस्य समाकर्षः। यथा प्राचीनपक्षान्य**प्रकारेण** प्रकृत्युपसर्जनपुरुषकर्तृत्वस्या**नुमितौ** साधनेऽपि। **ज्ञशक्तिवियोगात्** ज्ञस्य जीवस्य शरीरसम्बन्धार्थं प्रवृत्तिशक्तिवियोगात् अङ्गित्वानुपपत्तेरेवेत्यर्थः ॥ १ ॥

## १०. ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ

**विप्रतिषेधात्** सकलश्रुतिस्मृतियुक्तिविरुद्धत्वादनीश्वरमतम-**समञ्जस**मयुक्तमित्यर्थः ॥ २ ॥

॥ वैशेषिकाधिकरणम् ॥ ६ ॥

## ११. ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ

**महद्दीर्घवत्** वैशेषिकमते त्र्यणुकादिगतान्महत्त्वात् दीर्घत्वाच्च चतुरणुकादिगतपरिमाणमुत्पद्यते। **तथा ह्रस्वपरिमण्डलाभ्याम**पि द्व्यणुकपरमाणूभयगतह्रस्वत्वपारिमाण्डल्यपरिमाणाभ्यामपि त्र्यणुकद्व्यणुकगतपरिमाणोत्पत्तिः स्यादित्यर्थः। अन्यथा महत्वदीर्घत्वाभ्यामपि कार्योत्पत्तिर्न स्यादिति **वा**शब्दार्थः। तस्माद् वैशेषिकमतमनुपपन्नमिति भावः ॥ १ ॥

## १२. ॐ उभयथाऽपि न कर्माऽतस्तदभावः ॐ

यतः **उभयथाऽपि** ईश्वरेच्छाया नित्यत्वानित्यत्वरूपपक्षद्वयेऽपि। **न** परमाणुषु **क्रियो**त्पत्तिसम्भवः। **अतस्तदभावः** तस्मिन् द्व्यणुकादिकार्याभावः स्यादित्यर्थः ॥ २ ॥

## १३. ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ

वैशेषिकैः अवयवावयव्यादीनां भिन्नत्वनिमित्तेन **समवायाभ्युपगमात्**। समवायसम्बन्धाङ्गीकारात्। **साम्यात्** समवाय्यसमवायिनोरपि भिन्नत्व-

साम्यात् । तत्रापि समवायाभ्युपगमे **अनवस्थितेः** अनवस्थानाच्च तन्मतमयुक्तमित्यर्थः ॥ ३ ॥

## १४. ॐ नित्यमेव च भावात् ॐ

दोषसमुच्चये **चः** । ईशेच्छापरमाण्वादिकारणानां सदात्वात् । वैशिषिकमते **नित्यमेव** सर्वदैव । **भावात्** कार्योत्पत्तिः स्यात् । न तु कदाचिदित्यर्थः ॥ ४ ॥

## १५. ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ

किञ्च वैशिषिकमते पार्थिवाप्यतैजसपरमाणूनां **रूपादिमत्त्वात्** । **विपर्ययः** नित्यत्वविपरीतानित्यत्वं स्यात् । कुतः? **दर्शनात्** यद्रूपादिमत् तदनित्यमिति व्याप्तेः घटादौ दृष्टत्वादित्यर्थः ॥ ५ ॥

## १६. ॐ उभयथा च दोषात् ॐ

वैशेषिकमते **उभयथा च** परमाणुनित्यत्वानित्यत्वरूपपक्षद्वयेऽपि । **दोषात्** तद्वत् सर्वनित्यत्वकारणाभावनिमित्तकतदुत्पत्त्यभावस्य दोषस्य सत्त्वात् न तत्पक्षो युक्त इत्यर्थः ॥ ६ ॥

## १७. ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ

**अपरिग्रहात्** वैशिषिकमतस्य श्रुत्यादिपरिग्रहशून्यत्वात् तद्विरुद्धत्वाच्च । तत्रा**त्यन्तमनपेक्षा** अनादरः कार्य इत्यर्थः ॥ ७ ॥

॥ समुदायाधिकरणम् ॥ ७ ॥

## १८. ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ

यतः **समुदाये** परमाणुसमुदायेऽनेकत्वसङ्ख्यारूपे मिलितानेकपरमाणुनिमित्तकेऽङ्गीकृते सत्यपि विरलानेकहेतुके वाऽङ्गीकृते सति । **तदप्राप्तिः**

तस्य समुदायस्य विरलानेकहेतुकस्याप्राप्तिः अनुपपत्तिः । कुतः अन्योन्याश्रयादिदोषादिति शेषः । तदुपपादितं टीकायाम् । अतः परमाणुपुञ्ज एव घटावयवीति बौद्धपक्षोऽपि न क्षम इत्यर्थः ॥ १ ॥

## १९. ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ

ननु परमाणुपुञ्जस्य सदा सत्त्वेऽपि नास्मत्पक्षे प्रलयानुपपत्तिः । कुतः? तद्व्यवहारादेरित**रेतरप्रत्ययत्वात्** । इदमिदं चेति परमाणुपरस्परापेक्ष-बुद्धिनिमित्तकत्वात् । तथा च तादृशबुद्ध्यभावकाले समुदायव्यवहारादेरसत्त्वात् प्रलयोपपत्तिरिति **चेन्न** । कुतः? **उत्पत्तिमात्रनिमित्तत्वात्** परमाणूनां स्वसमुदायोत्पत्तिमात्रनिमित्तत्वात् । न तेभ्योऽपेक्षाबुद्ध्यादेरप्युत्पत्तिः सम्भवतीति **मात्र**शब्दार्थः । तथाच तन्निमित्तकव्यवहारादिः क्षणिकमते न कदाऽपि सम्भवतीत्यर्थः ॥ २ ॥

## २०. ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ

**चो**ऽवधारणे समुच्चये च । **नेत्यनुवर्तते** । सामर्थ्यादिति शेषः । तथाच न केवलं क्षणिकमते समुदायव्यवहारानुपपत्तिः । किन्तु विशेषकार्योत्पत्तिश्च न युक्ता । कुतः? **उत्तरोत्पादे** च कारणस्य सदृशकार्यजननसामर्थ्यात् तेन कारणं प्रथमं स्वसदृशमुत्पाद्य पश्चाद् विसदृशकार्यमुत्पद्यताम् । को दोष इत्यतोऽप्याह– **उत्तर** इति । तथाच उत्तरस्य स्वसदृशकार्योत्पादे उत्पत्तौ सत्यामेव । **पूर्वनिरोधात्** पूर्वस्य कारणस्य नाशात् । पुनर्विसदृशकार्यजनकत्वासम्भव इत्यर्थः ॥ ३ ॥

## २१. ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ

क्षणिकमते न प्रतिक्षणं कार्योत्पत्तिर्युज्यते । कुतः? **असति** कारणे कार्यमुत्पद्यत इत्यङ्गीकारे **प्रतिज्ञोपरोधः** तस्य तत्कार्यत्वमिति प्रतिज्ञायाः सिद्धान्तव्यवहारस्योपरोधो हानिः स्यात् । अन्यथा कारणे सति कार्यमुत्पद्यत इत्यङ्गीकारे **यौगपद्यं** कारणेन सह कार्याणामेकदावस्थानं प्रसज्यत इत्यर्थः ॥४॥

## २२. ॐ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॐ

एवं क्षणिकमते **प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिः** प्रतिसङ्ख्याऽप्रति-सङ्ख्यानिरोधयोः प्रतिक्षणविनाशसन्तानविनाशयोः अप्राप्तिः अनुपपत्तिः। कुतः? **अविच्छेदात्**। तद्रीत्या कार्योत्पत्तावकार्याणां चाविच्छिन्नत्वादित्यर्थः ॥ ५ ॥

## २३. ॐ उभयथा च दोषात् ॐ

**उभयथा** कारणे सति कार्यं भवत्येवेति नियमपक्षे तदभावपक्षे **च**। **दोष-सत्त्वात्** कार्यकारणविशेषकार्यानुत्पत्त्याख्यदोषात्। नान्यतरपक्षावलम्बेनार्थापत्त्या क्षणिकपक्षो युक्त इत्यर्थः ॥ ६ ॥

## २४. ॐ आकाशे चाविशेषात् ॐ

**चो**ऽप्यर्थे। दीपदृष्टान्तेन सत्त्वहेतुना जगति क्षणिकत्वसाधने आकाश-दृष्टान्तेनाक्षणिकत्वस्यापि साधनापातः। ननु दृष्टान्ते साध्यवैकल्यमित्यत उक्तं **आकाशेऽविशेषादिति**। क्षणिकत्वसाधकत्वेन परोक्तपरिमाण-विशेषादर्शनादित्यर्थः। तथाच सत्प्रतिपक्षोऽयं हेतुरिति न तेन क्षणिकत्व-सिद्धिरिति भावः ॥ ७ ॥

## २५. ॐ अनुस्मृतेश्च ॐ

तदेवेदमिति प्रत्यभिज्ञानाच्च तद्विरोधात् न सत्त्वहेतुना क्षणिकत्वसाधनं युक्तमित्यर्थः ॥ ८ ॥

॥ असदधिकरणम् ॥ ८ ॥

## २६. ॐ नासतोऽदृष्टत्वात् ॐ

**असतः** शून्यस्य। **न** जगत्कर्तृतत्वं युक्तम्। कुतः? प्रमाणाभावादिति शेषः। तत्कुतः? **अदृष्टत्वात्**। क्वाप्यसतः कारणत्वादर्शनात्। अत एवानुमानागमयोरप्यभावादित्यर्थः ॥ १ ॥

## २७. ॐ उदासीनानामपि चैवं सिद्धिः ॐ

**एवं** सत्यसतः कार्योत्पादकत्वेऽङ्गीकृते सति । **उदासीनानां** हेयोपादेयत्वबुद्ध्यविषयाणां गगनकुसुमादीनां सकाशादपि सौरभ्यादिकार्य**सिद्धिः** स्यादित्यर्थः । अन्यथा शून्यादपि कार्योत्पत्तिर्न स्यादिति **च**शब्दार्थः ॥२॥

## २८. ॐ नाभाव उपलब्धेः ॐ

जगत् **अभावः** असत् न । कुतः? उपलब्धेः सदिति प्रतीयमानत्वादित्यर्थः ॥ ३ ॥

## २९. ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ

जगत् **स्वप्नादिवत्** स्वाप्नवस्तुन्यारोपितजाग्रत्वादिवदप्यसन्न । कुतः? **वैधर्म्यात्** स्वाप्नजाग्रत्वस्य बाध्यत्वाख्यविलक्षणधर्मवत्त्वात् । जगति च तदभावादित्यर्थः ॥ ४ ॥

॥ अनुपलब्ध्यधिकरणम् ॥ ९ ॥

## ३०. ॐ न भावोऽनुपलब्धेः ॐ

जगत् **भावः** ज्ञानात्मकमपि **न** । कुतः? **अनुपलब्धेः** ज्ञानज्ञेययोरभेदाननुभवादित्यर्थः ॥ १ ॥

## ३१. ॐ क्षणिकत्वाच्च ॐ

ज्ञानस्यैकक्षणावस्थायित्वाज्जगतः स्थायित्वात् तद्विरोधान्न तयोरैक्यमित्यर्थः ॥ २ ॥

## ३२. ॐ सर्वथाऽनुपपत्तेश्च ॐ

सर्वप्रकारेणा**नुपपत्तेः** बौद्धराद्धान्तस्य युक्तिशून्यत्वात् तद्विरुद्धत्वाच्च न ग्राह्यत्वमित्यर्थः ॥ ३ ॥

॥ नैकस्मिन्नधिकरणम् ॥ १० ॥

## ३३. ॐ नैकस्मिन्नसम्भवात् ॐ

जैनोक्तसप्तप्रकारा **एकस्मिन्** वस्तुनि **न** युक्ताः । कुतः? **असम्भवात्** अप्रामाणिकत्वेन तेषामेकत्रासम्भावितत्वादित्यर्थः । सप्तप्रकारास्तु सत्त्वं, असत्त्वं, सदसत्त्वं, सद्विलक्षणत्वं, सत्वे सति सद्विलक्षणत्वं, असत्त्वे सति असद्विलक्षणत्वं, सदसत्त्वे सति सदसद्विलक्षणत्वमित्येवंरूपाः ज्ञातव्याः ॥ १ ॥

## ३४. ॐ एवञ्चाऽऽत्माकार्त्स्न्यम् ॐ

**एवञ्चा**ऽऽत्मनः कायपरिमाणेऽङ्गीकृते सत्यात्म**ाकार्त्स्न्यं** आत्मनः प्राक् पिपीलिकादेहं प्राप्तस्य तत्कायपरिमितस्य जीवस्याकार्त्स्न्यं गजगर्दभादिशरीरप्राप्तावपूर्णता स्यादित्यर्थः । एवं गजशरीरं प्राप्तस्याऽऽत्मनः पिपीलिकादेहप्राप्तावकार्त्स्न्यमाधिक्यं च स्यादित्यपि द्रष्टव्यम् ॥ २ ॥

## ३५. ॐ नच पर्यायादप्यविरोधो विकारादिभ्यः ॐ

**पर्यायात्** क्रमात् क्रमेण तत्तद्देहपरिमाणत्वाङ्गीकारादपि । **अविरोधः** नोक्तदोष इति च न युज्यते । कुतः? यतः पर्यायो न युज्यते । तदपि कुतः? **विकारादिभ्यः** तथा सति तत्तत्कालीनपरिमाणभेदेन वस्तुभेदात् । आत्मनो विकारित्वापत्तेः । ततश्चानित्यत्वान्निर्मोक्षत्वादिदोषप्रसङ्गादित्यर्थः ॥ ३ ॥

## ३६. ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ

पूर्वसूत्रादेवं चेत्यनुषज्यते । **अन्त्यावस्थिते**रित्येतदावर्तते । चशब्दोऽवधारणे समुच्चये च । तथाच एवं सति आत्मनः कायपरिमाणत्वेऽङ्गीकृते **अन्त्यावस्थितेः** प्रसङ्ग इति शेषः । मोक्षेऽपि सतः आत्मनः शरीरसत्त्वमङ्गीकार्यं स्यादित्यर्थः । कुतः? **अन्त्यावस्थितेश्च** अन्त्यस्य मौक्तिकपरिमाणस्यावस्थितेरवश्यमङ्गीकार्यत्वात् । अवच्छेदकशरीरं विना अवच्छेद्यपरिमाणसत्त्वायोगादिति भावः । परिमाणमेव कुत इत्यतोऽप्याह– **अन्त्येति** ।

अन्त्यस्य मौक्तिकात्मस्वरूपस्य मुक्तावस्थितेरवश्यं स्वरूपसत्त्वस्य परिमाणं विनाऽयोगादिति भावः । अस्तु मोक्षेऽपि शरीरं ततः किमित्यत उक्तं **उभयनित्यत्वादिति** । तथा सति उभयोः मुक्तकालीनयोर्देहात्मनोर्नित्यत्व-प्रसङ्गादित्यर्थः । अस्तु मौक्तिकशरीरनित्यत्वं ततः किमित्यत आह । ततश्च सर्वनित्यत्वं स्यादित्यापाद्यवाक्यमध्याहार्यम् । अत एव समुच्चयार्थकश्च-शब्दः । सर्वेषामधुनातनशरीराणां नित्यत्वं स्यादित्यर्थः । कुत इत्यत आह– **अविशेषादिति** । मुक्तिकालीनानाम् अधुनातनानां च शरीराणां शरीरत्वा-विशेषादित्यर्थः । तस्मान्न कायपरिमाणत्वमात्मनो युक्तमिति भावः ॥४॥

॥ पत्युरधिकरणम् ॥ ११ ॥

## ३७. ॐ पत्युरसामञ्जस्यात् ॐ

**पत्युः** पशुपतेः जगत्कारणत्वं न युक्तम् । कुतः? **असामञ्जस्यात्** पार-तन्त्र्योत्पत्त्यादिदोषवत्वादित्यर्थः ॥ १ ॥

## ३८. ॐ सम्बन्धानुपपत्तेश्च ॐ

शिवस्याशरीरत्वेन जगता **सम्बन्धानुपपत्तेः** न तस्य कर्तृत्वमित्यर्थः ॥ २ ॥

## ३९. ॐ अधिष्ठानानुपपत्तेश्च ॐ

प्रलये सर्वेषां नष्टत्वात् पुनः सृष्टिकाले पशुपतेः पृथिव्याद्याश्रयानुपपत्तेश्च न तस्य जगत्कर्तृत्वमित्यर्थः ॥ ३ ॥

## ४०. ॐ करणवच्चेन्न भोगादिभ्यः ॐ

ननु यतः साधनजातं पशुपतेः **करणवत्** शरीरवत् शरीरेण तुल्यम् अधिष्ठान-तुल्यं च अतो नोक्तदोष इति चेन्न । कुतः? **भोगादिभ्यः** शरीरकृतसुखदुःख-भोगोत्पत्तिमरणादिदोषेभ्य इत्यर्थः ॥ ४ ॥

## ४१.ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ

यतः शिवस्य देहित्वतदभावपक्षयोः क्रमेणा**न्तवत्त्वं** नाशवत्त्वं **असर्वज्ञता** न सर्वज्ञत्वं स्यात् अतो न तद्युक्तमित्यर्थः ॥ ५ ॥

॥ उत्पत्त्यधिकरणम् ॥ १२ ॥

## ४२. ॐ उत्पत्त्यसम्भवात् ॐ

न शक्तिर्जगत्कारणम् । कुतः? **उत्पत्त्यसम्भवात्** शक्तिशब्दितकेवलस्त्रीभ्यः अपत्योत्पत्त्ययोगादित्यर्थः ॥ १ ॥

## ४३. ॐ न च कर्तुः करणम् ॐ

यतः **कर्तुः** शक्त्यनुग्राहकशिवस्य च **करणं** ज्ञानादिसाधनं **न** । अतो न तस्य शक्त्यनुग्राहकत्वमित्यर्थः ॥ २ ॥

## ४४. ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ

**विज्ञानादिभावे** वा शिवस्य ज्ञानेच्छादिसत्त्वेऽङ्गीकृते च । **तदप्रतिषेधः** तस्य शैवपक्षस्याप्रतिषेधः अनिरासः अनुमतिः कृता स्यात् स च दूषित एवेत्यर्थः ॥ ३ ॥

## ४५.ॐ विप्रतिषेधाच्च ॐ

सकलश्रुतिस्मृतिविरुद्धत्वाच्च शाक्तेयमतमसमञ्जसमयुक्तमित्यर्थः ॥ ४ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥**

—०—

# द्वितीयाध्यायस्य तृतीयः पादः

॥ वियदधिकरणम् ॥ १ ॥

## १. ॐ न वियदश्रुतेः ॐ

**वियत्** आकाशमनुत्पत्तिमन्न किन्त्वीशादुत्पत्तिमदेव । कुतः । **अश्रुतेः** वियदनुत्पत्तौ श्रुत्यभावादित्यर्थः ॥ १ ॥

## २. ॐ अस्ति तु ॐ

आकाशोत्पत्तौ 'आत्मन आकाशः सम्भूतः'[१] इति श्रुतिरस्त्येवेत्यर्थः ॥२॥

## ३. ॐ गौण्यसम्भवात् ॐ

'अनादिर्वाऽयमाकाशः' इति श्रुतिर्गौणी अमुख्यानादित्वपरा । कुतः । **असम्भवात्** तस्याः मुख्यार्थत्वे बहुलोत्पत्तिश्रुत्ययोगादित्यर्थः ॥ ३ ॥

## ४. ॐ शब्दाच्च ॐ

'अथ ह वाव नित्यानि'[२] इति श्रुतिबलाच्चानादित्वश्रुतिर्गौणार्थेत्यर्थः ॥ ४ ॥

## ५. ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ

चोऽवधारणे । **ब्रह्मशब्दवत्** यथा **एकस्यैव** ब्रह्मशब्दस्य विष्णौ मुख्यत्वं जीवे त्वमुख्यताऽस्ति । तथा एकस्यैव नित्यत्वबोधकशब्दस्य ब्रह्मणि मुख्यार्थता **स्यात्** भवेदित्यर्थः ॥ ५ ॥

---

१. (तै.२–१)

२. '**अथ ह वाव नित्यानि** पुरुषः प्रकृतिरात्मा काल इति । अथ यान्यनित्यानि प्राणः श्रद्धा भूतानि भौतिकानीति । यानि ह वाव उत्पत्तिमन्ति तान्यनित्यानि । यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि, न ह्येतानि कदाचनोत्पद्यन्ते न विलीयन्ते पुरुषः प्रकृतिरात्मा काल इति । अथैतान्युत्पत्तिमन्ति च अनुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्ते' (भाल्लवेयश्रुतिः)

## ६. ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ

आकाशस्य मुख्यानुत्पत्त्युक्तौ **प्रतिज्ञाहानिः** 'स इदं सर्वमसृजत'[१] इति विष्णोः स्रष्टृत्वप्रतिज्ञाहानिः स्यात् । कुतः? **अव्यतिरेकात्** आकाशस्य सर्वशब्दार्थानतिरिक्तत्वात् । किञ्च यतः शब्देभ्यः 'आत्मा वा इदम्'[२] इत्यादिस्पष्टश्रुतिभ्यश्च ब्रह्मण एव मुख्यानुत्पत्तिः । न त्वन्यस्येत्यवसीयते अत उक्तं युक्तमित्यर्थः ॥ ६ ॥

## ७. ॐ यावद्विकारन्तु विभागो लोकवत् ॐ

**यावच्छब्दो**ऽवधारणे । **यावद्विकार**मित्यव्ययम् । **तु**शब्दश्चशब्दार्थे । तथाच यतः **यावद्विकारं** विक्रियमाणमेव वस्तु । **विभागः** विभागशब्दिताल्पशक्तिमत् । न त्वन्यदिति नियमः सिद्धः । अतो **लोकवत्** लोक इव । यथा लोके घटादौ विभक्तत्वाद् विकारित्वमङ्गीकृतं तथाऽऽकाशादेरपि विभक्तत्वहेतुना विकारित्वं सिद्ध्यति । तत एव सादित्वमपि सिद्ध्यतीत्यर्थः ॥७॥

॥ मातरिश्वाधिकरणम् ॥ २ ॥

## ८. ॐ एतेन मातरिश्वा व्याख्यातः ॐ

**एतेन** पूर्वोक्तविभक्तत्वादिहेतुना । **मातरिश्वा** मुख्यवायुः । **व्याख्यातः** उत्पत्तिमत्वेनोक्त इत्यर्थः ॥ १ ॥

॥ असम्भवाधिकरणम् ॥ ३ ॥

## ९. ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ

तुशब्दोऽवधारणे । **सतः** विष्णोः **असम्भवः** अनुत्पत्तिरेव । न तु 'असतः सदजायत'[३] इति श्रुत्या असतः सकाशादुत्पत्तिर्वाच्या । कुतः? **अनुपपत्तेः** । अतो विष्णोरसदुत्पत्तेरयोगादित्यर्थः ॥ १ ॥

---

१. (तै.२–६) २. 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ.१–१) ३. (तै.२–७)

॥ तेजोऽधिकरणम् ॥ ४ ॥

## १०. ॐ तेजोऽतस्तथा ह्याह ॐ

**तेजस्**तेजोभूतम् । **अतः** ब्रह्मण एवोत्पद्यते न वायोः । कुतः? **हि** यस्मात् । 'तत्तेजः'[१] इति श्रुतिः **तथा** उक्तप्रकारेणाऽह वक्ति तस्मादित्यर्थः ॥१॥

॥ अबधिकरणम् ॥ ५ ॥

## ११. ॐ आपः ॐ

अत्रापि **अतः** तथाह्याहेत्यनुवर्तते । तथाच **आपः** अतः विष्णोरेवोत्पत्तिमत्यः । न त्वन्यतः । कुतः? **हि** यस्मात् ब्रह्मैवेदमिति श्रुतिस्तथाऽऽह तस्मादित्यर्थः ॥ १ ॥

॥ पृथिव्यधिकरणम् ॥ ६ ॥

## १२. ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ

**पृथिवी** पृथिव्येव 'ता अन्नमसृजन्त'[२] इति श्रुतिः । तथाऽन्नशब्देनोच्यते न प्रसिद्धान्नम् । कुतः? **अधिकाररूपशब्दान्तरादिभ्यः अधिकार**शब्दितभूतप्रकरणात् **रूप**शब्दोक्तकृष्णरूपस्य च श्रवणात् । **शब्दान्तरं** शब्दविशेषः 'पृथिवी वा अन्नम्'[३] इति श्रुतिविशेषाच्चेत्यर्थः । अपौरुषेयत्वेनादोषस्य वाक्यस्य नाप्रामाण्यमित्यादियुक्तिरादिशब्दार्थः ॥ १ ॥

॥ तदभिध्यानाधिकरणम् ॥ ७ ॥

## १३. ॐ तदभिध्यानादेव तु तल्लिङ्गात् सः ॐ

---

१. 'तत्तेजोऽसृजत' (छां.६–२–३)

२. 'ता आप ऐक्षन्त बह्वयस्याम प्रजायेमहीति। ता अन्नमसृजन्त' (छां.६.२)

३. (तै.३–९)

तुशब्दोऽवधारणे । **अभिध्यान**शब्देनेच्छोच्यते । **तत्**छब्देन विष्णुर्गृह्यते । तथाच स विष्णुरेव संहारकर्ता न रुद्रः । कुतः? **तदभिध्यानात्** 'तस्याभिध्यानात्'[१] इति श्रुत्युक्तत्वात् तस्य विष्णोः **अभिध्यान**रूपशब्दज्ञापितसञ्जिहीर्षाविशेषितादनादिबन्धसंहारेच्छारूपात्त**लिङ्गादेव** सादिजगत्संहर्तृत्वसाधकादेवेत्यर्थः । **एव**कारस्तु भाष्यरीत्या किमु श्रुतिभ्य इति कैमुत्यसूचकः ॥ १ ॥

॥ विपर्ययाधिकरणम् ॥ ८ ॥

## १४. ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ

तुशब्दोऽवधारणे । **अत** इत्यावर्तते । अत उत्पत्तिक्रमात् । **विपर्ययेण** वैपरीत्येन । **क्रमः** लयक्रमः । न तूत्पत्तिक्रमेण । कुतः? **अत एव** व्युत्क्रमादिति श्रुतेरेव । किञ्च **उपपद्यते** युज्यते चायं व्युत्क्रमः । कुतः पूर्वोत्पन्नानां उत्तरोत्पन्नेभ्योऽधिकसामर्थ्येन तेषाम् अधिककालावस्थानस्य युक्तत्वादित्यर्थः ॥१॥

॥ अन्तराधिकरणम् ॥ ९ ॥

## १५. ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ

**विज्ञानमनसी** विज्ञानतत्त्वमनस्तत्त्वे । **अन्तरा** विना । अन्यत्र **क्रमेण** व्युत्क्रमेण लयः न तयोरपि । कुतः? **तल्लिङ्गात्** 'मनसश्च विज्ञानम्'[२] इत्यत्र विज्ञानात् पूर्वोत्पन्नतया भूतस्यापि मनसः 'यच्छेद् वाङ्मनसी'[३] इति पूर्वमेव लयोक्तिरूपसाधकदर्शना**दिति चेन्न** । कुतः? **अविशेषात्** । विज्ञानमनस्तत्त्वयोर्यथोत्पत्तिलय इत्यत्र विशेषप्रमाणाभावादित्यर्थः ॥ १ ॥

---

१. '**तस्याभिध्यानाद्**योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.१.१०)

२. 'प्राणान्मनो **मनसश्च विज्ञानम्**'

३. '**यच्छेद् वाङ्मनसी** प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' (कठ.३.१३)

## १६. ॐ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ

**चराचरव्यपाश्रयः** चराचरशब्दितेन्द्रियतद्वृत्तिज्ञानविषयसाधारणः । **तद्व्यपदेशस्तु** 'मनसश्च विज्ञानम्' इति श्रौतव्यवहारस्तु । **भाक्तः** एकदेशः मनोविज्ञानशब्दार्थैकदेशभूतेन्द्रियवृत्तिज्ञानविषयक एव न तत्वविषयकः । कस्मान्निमित्तात् । **तद्भावभावित्वात्** । तस्यावृत्तिः तस्मिन् **चराचर**शब्दितचेतनाचेतनविषये तद्भावेन मनोभावेन आलोचनेन **भावित्वात्** उत्पद्यमानत्वात् । अतो नोक्तलिङ्गदर्शनं बाधकमित्यर्थः ॥ २ ॥

॥ आत्माधिकरणम् ॥ १० ॥

## १७. ॐ नात्माऽश्रुतेः नित्यत्वाच्च ताभ्यः ॐ

**आत्मा** परमात्मा न विलीयते । **अश्रुतेः** तल्लयस्य क्वाप्यश्रवणात् । किञ्च ताभ्यः 'स नित्यो निर्गुणः'[१] इत्यादिश्रुतिभ्यः **नित्यत्वात्** विष्णोर्नित्यत्वावगमाच्च **न** तस्य नाश इत्यर्थः ॥ १ ॥

॥ ज्ञाधिकरणम् ॥ ११ ॥

## १८. ॐ ज्ञोऽत एव ॐ

जानातीति **ज्ञः** जीवोऽपि । **अतः** विष्णोः उत्पद्यत **एव** । कुतः? **अत एवाविनष्टा** एवोत्पद्यन्त[२] इति श्रुतेरेवेत्यर्थः ॥ १ ॥

## १९. ॐ युक्तेश्च ॐ

अनादिनित्यस्यापि जीवस्येशाधीनत्वदेहवत्त्वरूपोत्पत्तेः **युक्तत्वाच्च** जीवः उत्पत्तिमानेवेत्यर्थः ॥ २ ॥

---

१. '**स नित्यो निर्गुणो** विभुः परः परात्मा ।
नित्यो विभुः कारणो लोकसाक्षी परो गुणैस्सर्वदृक् शाश्वतश्च'

२. 'ते वा एते चिदात्मानोऽविनष्टाः परं ज्योतिर्निर्विशन्त्य**विनष्टा एवोत्पद्यन्ते** न विनश्यन्ति कदाचन' (काषायणश्रुतिः)

॥ उत्क्रान्त्यधिकरणम् ॥ १२ ॥

## २०. ॐ उत्क्रान्तिगत्यागतीनाम् ॐ

सोऽस्मादित्यादिवाक्योक्तदेहोत्क्रमणं लोकान्तरगमनैतल्लोकगमनरूपहेतूनां सकाशात् अणुरेव जीवः न विभुरित्यर्थः ॥ १ ॥

## २१. ॐ स्वात्मना चोत्तरयोः ॐ

**चशब्द** एवार्थः । जीवः **स्वात्मना** स्वतन्त्रपरमात्मनैव तत्प्रेरणयैवोत्क्रान्त्यादिमान् न स्वतः । कुतः? **उत्तरयोः** सकाशात् 'स एतेनैव स्वात्मना', 'एष ह्येनं जीवम्'[१] इति उत्तरवाक्यबलादित्यर्थः ॥ २ ॥

## २२. ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ

ननु न जीवोऽणुः । कुतः **अतच्छ्रुतेः** 'व्याप्ता ह्यात्मानः' इत्यणुत्वविरुद्धव्याप्तत्व**श्रुतेः** श्रवणा**दिति चेन्न** । कुतः? **इतराधिकारात्** परमात्मप्रकरणात् । तथा च व्याप्तत्वश्रुतेः परमात्मविषयत्वात् नाणुत्वबाधकत्वमित्यर्थः ॥ ३ ॥

## २३. ॐ स्वशब्दोन्मानाभ्याञ्च ॐ

**चः** समुच्चये । न केवलं प्रकरणबलाद् व्याप्तत्वश्रुतिर्विष्णुपरा । किन्तर्हि 'एषोऽह्यात्माऽध्युद्गतो मानशक्तेः'[२] इति वाक्यस्थ**स्वशब्द**गृहीतब्रह्मवाचकात्मशब्दादुन्मानशब्दितापरिमितत्वलिङ्गाच्च व्याप्तत्वश्रुतिर्विष्णुपरैव न जीवपरेत्यर्थः ॥ ४ ॥

## २४. ॐ अविरोधश्चन्दनवत् ॐ

---

१. '**स एतेनैव स्वात्मना** परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते तं वा एतमभिवदन्ति स्वात्मा', 'एष ह्यानन्दमादत्ते एष **ह्येनं** जीवमभिजीवयत्येष उद्गमयत्येष आगमयति' (पौष्यायण.)

२. 'एषोऽह्यात्माऽध्युद्गतो मानशक्तेः तथाऽप्यसौ प्रमितिं याति वेदैः । पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः सर्वाधीशः सर्ववित्सर्वकर्ता' (काषायण.)

**चन्दनवत्** चन्दनरस इव । यथा चन्दनबिन्दोरेकदेशपतितत्वेऽपि स्वांशैः शरीरव्याप्तिः । तथा**ऽविरोधः** जीवस्याणुत्वेऽपि स्वांशैर्देहव्याप्तौ न विरोध इत्यर्थः ॥ ५ ॥

## २५. ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ

ननु युक्तं चन्दनबिन्दोः शरीरे व्याप्तत्वम् । कुतः? **अवस्थितिवैशेष्यात्** देहे क्वचित्प्रदेशे सम्यगवस्थानसत्त्वात् न तथा जीवस्य तदभावादिति **चेन्न** । कुतः? यतः **हृदि** हि 'हृदि ह्येषः'[1] इति श्रुतिः जीवस्यापि हृदि सम्यगवस्थानमवयवान्तरे त्वसम्यगवस्थानाङ्गीकारादित्यर्थः ॥ ६ ॥

## २६. ॐ गुणाद्वाऽऽलोकवत् ॐ

**वा**शब्दः प्रकारान्तरे । **आलोकवत्** प्रदीपस्येव । यथा दीपस्य प्रभया व्याप्तिः । तद्वदणोरपि जीवस्य । **गुणात्** प्रकाशगुणात् व्याप्तिर्युज्यत इत्यर्थः । अविरोध इति सूत्रोक्तांशतो व्याप्तिः देवानां, गुणाद्वेति सूत्रोक्तप्रकाशतो व्याप्तिस्तु मनुष्याणामिति विवेको द्रष्टव्यः ॥ ७ ॥

॥ व्यतिरेकाधिकरणम् ॥ १३ ॥

## २७. ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ

**च**शब्दो 'अचिन्त्यये–'[2] इति स्मृतिसमुच्चायकः । **गन्धवत्** गन्धस्येव । यथा पुष्पगन्धस्य स्वांशैः **व्यतिरेको** विभागस्तथा अणोरपि जीवस्य स्वांशैः ईशशक्त्या व्यतिरेको युज्यते । कुत एतत् प्रतिपादयति यतो 'अथ' इति[3] श्रुतिः **तथा दर्शयति** अत एवेत्यर्थः ॥ १ ॥

---

१. '**हृदि ह्येष** आत्मा' (प्र.३–६)

२. '**अचिन्त्यये**शक्त्यैव ह्येकोऽवयववर्जितः ।
आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा' (पाद्मे.)

३. '**अथै**क एव सन् गन्धवद्व्यतिरिच्यते । अथैकीभवति । अथ बह्वीभवति । तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयान्' (शाण्डिल्यश्रुतिः)

॥ पृथगधिकरणम् ॥ १४ ॥

## २८. ॐ पृथगुपदेशात् ॐ

जीवः परमात्मना **पृथक्** भिन्नः । कुतः? **उपदेशात्** 'भिन्नोऽचिन्त्यः'[१] इति श्रुतेरित्यर्थः ॥ १ ॥

## २९. ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ

**प्राज्ञवत्** ब्रह्मण इव । यथा प्राज्ञे ब्रह्मणि 'सर्वं खल्विदं ब्रह्म'[२] इति जगदभेदोक्तिः । तथा जीवे **तद्व्यपदेशः** तत्त्वमसीति ब्रह्मैक्योक्तिर्युज्यते । कुतः? **तद्गुणसारत्वात्** जीवस्य ब्रह्मगुणसदृशज्ञानानन्दादिगुणस्वरूपत्वान्निमित्तादित्यर्थः ॥ २ ॥

॥ यावदधिकरणम् ॥ १५ ॥

## ३०. ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ

**यावदात्मभावित्वाच्च** जीवस्य यावत्परमात्मसत्त्वात् । नित्यत्वादिति यावत् । **न दोषः** 'सोऽनादिना'[३] इति पुण्यपापसम्बन्धबोधकश्रुत्यप्रामाण्यदोषो नास्ति । कुत एतत्? **तद्दर्शनात्** तस्य नित्यत्वस्य 'नित्यो जीवः'[४] इति श्रुता-वुक्तत्वाच्च 'आत्मा नित्यः जीव'[५] इति स्मृतिद्वयाच्चेत्यर्थः ॥ १ ॥

---

१. '**भिन्नोऽचिन्त्यः** परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः ।
यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत्' (कौशिकश्रुतिः)

२. (छां.३–१४–१)

३. '**सोऽनादिना** पुण्येन पापेन चानुबद्धः । परेण निर्मुक्तः आनन्त्याय कल्प्यते'

४. 'नित्यः परो **नित्यो जीवो**ऽनित्यास्तस्य धातवः ।
अत उत्पद्यते च म्रियते च विमुच्यते च' (आग्निवेश्यश्रुतिः)

५. 'आत्मा नित्यस्सुखदुःखे त्वनित्ये जीवो नित्यो धातुरस्य त्वनित्यः' (भारत.)

॥ पुंस्त्वाधिकरणम् ॥ १६ ॥

## ३१. ॐ पुंस्त्वदिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ

तुशब्द एवार्थे **पुंस्त्वादिवत्** पुंस्त्वादेरिव पुरुषयोषिदादीनामपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालविशेषे तदभिव्यक्तिः । तथा **सतः** जीवस्वरूपत्वेन मुक्तेः पूर्वमपि विद्यमानस्यै**वास्य** ज्ञानानन्दादेर**भिव्यक्तियोगात्** मुक्तावभिव्यक्त्या निमित्तभूतया योगात् 'आनन्दीभवति'[१] इति श्रुत्युपपत्तेः न जीवस्याऽनन्दादिरूपत्वे तच्छ्रुतिविरोध इति जीव आनन्दादिरूप एवेत्यर्थः ॥ १ ॥

## ३२. ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॐ

**वा**शब्दो व्यवस्थितविकल्पार्थः । **उपलब्धि**रनुभवः । **अन्यथा** जीवस्याऽनन्दादिरूपत्वमङ्गीकृत्याऽवरणानङ्गीकारे **नित्योपलब्ध्यनुपलब्धिप्रसङ्गः** । यथायोग्यमन्वयः । मुक्तियोग्यानां नित्यमानन्दानुभवः स्यात् । तमोयोग्यानां न कदाऽप्यानन्दानुभवः स्यात् । किन्तु स्वरूपदुःखानुभव एव स्यात् । एवं मध्यममनुष्या**णामन्यतरनियमः** अन्यतरयोः सुखदुःखानुभवयोः नियमः साम्यमेव स्यात् । प्रतिबन्धकीभूतावरणगतादित्यर्थः । तस्माज्जीवस्याऽवरणमङ्गीकार्यमिति भावः ॥ २ ॥

॥ कर्तृत्वाधिकरणम् ॥ १७ ॥

## ३३. ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ

जीवोऽपि **कर्ता** । कुतः? तथा सत्येव **शास्त्रार्थवत्त्वात्** विधिनिषेधरूपशास्त्रस्य प्रयोजनवत्त्वात् अन्यथा वैयर्थ्यप्रसङ्गादित्यर्थः ॥ ३ ॥

---

१. ' स दुःखाद्विमुक्त आनन्दी भवति । सोऽज्ञानाद्विमुक्तो ज्ञानीभवति । सोऽबलाद्विमुक्तो बली भवति । स नित्यो निरातङ्कोऽवतिष्ठते' (पैङ्गिश्रुतिः)

## ३४. ॐ विहारोपदेशात् ॐ

मुक्तावपि 'जक्षन् क्रीडन्'[१] इति **विहारकर्तृत्वोक्तेः** जीवः परमार्थत एव कर्ता । न काल्पनिककर्तेत्यर्थः ॥ २ ॥

## ३५. ॐ उपादानात् ॐ

जीवस्य मोक्षार्थे साधनाद्यनुष्ठानदर्शनात् ततः फलदर्शनाच्च न जीवः संसारेऽपि काल्पनिककर्तेत्यर्थः ॥ ३ ॥

## ३६. ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ

**क्रियायां** 'आत्मानमेव लोकमुपासीत'[२] इति उक्तोपासनक्रियायां **व्यपदेशाज्जीवस्य** कर्तृत्वोक्तेश्च । जीवः कर्ता **न चेत्** कर्तृत्वं न चेत् । **निर्देशविपर्ययः** निर्देशस्य जीवस्य कर्तृत्वेन ईश्वरस्य कर्मत्वेन वचनस्य **विपर्ययः** आत्मैवोपासीतेत्येवंरूपवैपरीत्यं स्यादित्यर्थः ॥ ४ ॥

## ३७. ॐ उपलब्धिवदनियमः ॐ

**उपलब्धिवत्** उपलब्धाविव । यथा जीवस्योपलब्धौ ज्ञाने । **अनियमः** स्वेच्छानुसारेण ज्ञानालाभः । तथा क्रियायामपि अनियमो युक्त इत्यर्थः ॥ ५ ॥

## ३८. ॐ शक्तिविपर्ययात् ॐ

ईशजीवयोः **शक्तिविपर्ययात्** पूर्णापूर्णरूपशक्तिभेदमपेक्ष्य कर्तृत्वमपि स्वतन्त्रपरतन्त्रभेदभिन्नमित्यर्थः । यद्वा ईश्वरवत् जीवे पूर्णशक्त्यभावान्न तस्य स्वतन्त्रकर्तृत्वमित्यर्थः ॥ ६ ॥

## ३९. ॐ समाध्यभावाच्च ॐ

---

१. 'जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा' (छां.८.१२.३)

२. (बृ.३-४-१५)

**समाधिरलंबुद्धि**स्तदभावात् न जीवस्य स्वतन्त्रकर्तृत्वं किन्तु परतन्त्र-कर्तृत्वमेवेत्यर्थः ॥ ७ ॥

## ४०. ॐ यथा च तक्षोभयथा ॐ

दार्ष्टान्तिकसमुच्चये चशब्दः । **यथा तक्षा** वर्धकिः । **उभयथा** प्रासादादि-कारयितृप्रेरितत्वेन तत्कर्तृत्वेन **च** व्यपदिश्यते तथा ईश्वरनियतोऽपि जीवः कर्तेति वक्तुं शक्यत इत्यर्थः ॥ ८ ॥

## ४१. ॐ परात्तु तच्छ्रुतेः ॐ

जीवस्य कर्तृत्वशक्तिः **परात्तु** परमात्मानमनुसृत्यैव तदधीनैवास्ति । कुतः । **तच्छ्रुतेः** । 'कर्तृत्वं करणत्वञ्च'[१] इति जीवकर्तृत्वस्येशाधीनत्वश्रवणादित्यर्थः ॥ ९ ॥

## ४२. ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ

**तु**रवधारणे । यतः परमात्मा **विहितप्रतिषेधावैयर्थ्यादिभ्यः**। तादर्थ्ये चतुर्थी । विधिनिषेधशास्त्राऽऽवैयर्थ्याय स्वस्य वैषम्यनैर्घृण्यपरिहाराय च । **कृतप्रयत्नापेक्षः** जीवकर्मप्रयत्नयोग्यतामपेक्षमाण एव जीवं प्रेरयति न त्वनपेक्षः सन् अतो जीवशक्तेरीशाधीनत्वेऽपि तस्यापेक्षितकृतिमत्त्वमस्त्येवेत्यर्थः ॥ १० ॥

॥ अंशाधिकरणम् ॥ १८ ॥

## ४३. ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ

जीवः परमात्मनोंऽश एव । पितापुत्रत्वादिसम्बन्धेन केवलं तदुपजीवक-स्वरूपांशत्वेन च न तु न कदाचित् ईश्वरवद् उपजीव्यः । कुतः । **नाना-**

---

१. '**कर्तृत्वं करणत्वं च** स्वभावश्चेतना धृतिः ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' (पैङ्गिश्रुतिः)

**व्यपदेशात्** 'मां रक्षतु' इत्यादौ पितृत्वभ्रातृत्वादिनानाप्रकारेण जीवस्येश-सम्बन्धित्वोक्तेः । किञ्च यतः **एके** शाखिनः 'अन्यः परोऽन्यो जीवः'[१] इत्यादिना एनं जीवं परात् **अन्यथा** भिन्नत्वेन **अधीयते** पठन्ति । यतः अन्ये च शाखिनः 'ब्रह्म दाशाः'[२] इत्यादिना ब्रह्मणो **दाशकितवादित्वं** दाशकितवशब्दितजातिविशेषयुक्तजीवप्रभृतिभावम् । तदभेदमिति यावत् । दाशकितवादेव चाब्रह्मत्वमधीयते । अतोंऽशत्वरूपांशत्ववानित्यर्थः ।। १ ।।

## ४४. ॐ मन्त्रवर्णात् ॐ

'पादोऽस्य'[३] इति श्रुतेश्च जीवः परमात्मांश इत्यर्थः ।। २ ।।

## ४५. ॐ अपि स्मर्यते ॐ

जीवस्यांशत्वं कृष्णादिभिः 'ममैवांशः'[४] इति स्मृत्या कथ्यते चेत्यर्थः ।।३।।

## ४६. ॐ प्रकाशादिवन्नैवं परः ॐ

जीवः **प्रकाशादिवत्** खद्योताद्यभिमानितेजोंऽशवत् । परमात्मनो भिन्नांशः । **परः** मत्स्यादिरूपी विष्णुस्तु । **नैवं** जीववद्भिन्नांशो न । **किन्तु प्रकाशादिवत्** कालाग्न्याद्यभिमानितेजोंऽशवत् ईशाभिन्नांश एवेत्यर्थः ।। ४ ।।

## ४७. ॐ स्मरन्ति च ॐ

स्मर्तारः जीवेशयोः भिन्नांशत्वाभिन्नांशत्वे 'एते स्वांशकलाः'[५] इत्यादिस्मृत्या कथयन्ति चेत्यर्थः ।। ५ ।।

## ४८. ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ

---

१. **'अन्यः परोऽन्यो जीवः** नासावस्य कुतश्चन । नायं तस्यापि कश्चन' (काषायणश्रुतिः)

२. **'ब्रह्म दाशाः** ब्रह्म कितवाः ब्रह्मैवेमे दाशाः' ३.(ऋ.१०-९०-३) ४. (भ.गी.१५-७)

५. **'एते स्वांशकलाः** पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रादिव्याकुलं लोकं मृडयन्ति युगेयुगे' (भागवत.१-३-२८)

यतो **ज्योतिरादिवत्** चक्षुर्गोलकादिस्थितापभ्रष्टदेवतादेः **तत्तद्देहसम्बन्धात्** सूर्यवरुणाद्यनुज्ञया तत्प्रवृत्त्यादेरिव जीवस्यापि तत्तद्देहसम्बन्धाद्धेतोः। **अनुज्ञा-परिहारौ** परमात्मानुज्ञाधीनप्रवृत्तिसम्बन्धपरिहारौ न तथा मत्स्यादेः। किन्तु **ज्योतिरादिवत्** सूर्यप्रभाद्यभिमानिनः यथा तदधीनप्रवृत्त्यादिमत्त्वं तथेशाधीनप्रवृत्तिरेव अतोऽपि जीवः परमात्मनो भिन्नांशः। मत्स्यादिस्तु अभिन्नांश इति व्यवस्था सिद्धेत्यर्थः ॥ ६ ॥

## ४९. ॐ असन्ततेश्चाव्यतिकरः ॐ

**असन्ततेः** जीवस्य सम्यक् शक्त्यभावात् मत्स्यादीनां तु तद्भावात्। **अव्यतिकरः** जीवेशयोर्भिन्नाभिन्नांशत्वमित्युक्तार्थस्य व्यत्यासाभाव इत्यर्थः ॥७॥

## ५०. ॐ आभास एव च ॐ

**चः** समुच्चये। यतो जीवः परस्य **आभास एव** प्रतिबिम्ब एव। मत्स्यादिस्तु न तथा। अतोऽप्युक्तस्य न व्यत्यास इत्यर्थः ॥ ८ ॥

॥ अदृष्टाधिकरणम् ॥ १९ ॥

## ५१. ॐ अदृष्टानियमात् ॐ

अदृष्टपदोपलक्षितविद्याकर्मसंस्काराणामनियमात्। नियमो नामैकप्रकारता। अनियमोऽनेकप्रकारता। तथाच वैचित्र्यं वैचित्र्यात् प्रतिबिम्बभूतजीवानामपि देवदानवमानवादिवैचित्र्यं युज्यत इत्यर्थः ॥ १ ॥

## ५२. ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ

यतो**ऽभिसन्ध्यादिषु** कामक्रोधादिदोषेष्व**पि**। **एवम**दृष्टादिवैचित्र्यादेव वैचित्र्यं वाच्यम्। अत आवश्यकत्वाददृष्टवैचित्र्यमेव जीववैचित्र्यकारणम्। न दोषादिवैचित्र्यमित्यर्थः ॥ ४ ॥

## ५३. ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ

ननु **प्रदेशात्** स्वर्गभूम्यादिस्थानवैचित्र्यादेव सुरनरादिजनवैचित्र्यमस्तु नादृष्टवैचित्र्यादिति **चेन्न**। कुतः? **अन्तर्भावात्** स्थानवैचित्र्ये किं कारणमिति कारणान्वेषणे तत्कारणस्यादृष्टवैचित्र्य एवान्तर्भावात् तद्रूपत्वात् । अत आवश्यकत्वाददृष्टवैचित्र्यमेव सुरनरादिवैचित्र्यनियामकमित्यर्थः ॥ ५ ॥

**इति श्रीजगन्नाथयतिविरचितायां सूत्रदीपिकायां**
**द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥**

—०—

# द्वितीयाध्यायस्य चतुर्थः पादः

॥ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

## १. ॐ तथा प्राणाः ॐ

यथा आकाशादयः विष्णोरुत्पद्यन्ते । **तथा प्राणाः** इन्द्रियाण्यपि उत्पद्यन्त एव न त्वनुत्पत्तिमन्तीत्यर्थः ॥ १ ॥

## २. ॐ गौण्यसम्भवात् ॐ

प्राणा एवानादय इत्यनादित्वश्रुतिः **गौणी** अमुख्या सूक्ष्मरूपेणानुत्पत्ति-विषया । कुतः? **असम्भवात्** इन्द्रियाणां मुख्यानादित्वायोगात् । 'एतस्मात्' इति श्रुत्ययोगाच्चेत्यर्थः ॥ २ ॥

## ३. ॐ प्रतिज्ञानुपरोधाच्च ॐ

'स इदं सर्वमसृजत'[1] इति **प्रतिज्ञानुपरोधात्** प्रतिज्ञानुसाराच्च प्राणा उत्पाद्यन्त इत्यङ्गीकार्यमित्यर्थः ॥ ३ ॥

॥ तत्प्रागधिकरणम् ॥ २ ॥

## ४. ॐ तत्प्राक् श्रुतेश्च ॐ

तदनुत्पत्तीति स्मृतिसमुच्चये चशब्दः । तस्य मनसः । तेभ्योऽन्येन्द्रियेभ्यः **प्राक्** पूर्वम् उत्पन्नत्वेन । **श्रुतेः** 'मनः सर्वेन्द्रियाणि च'[2] इति श्रवणात् । मन उत्पत्तिमदेव न त्वनुत्पत्तिमदित्यर्थः ॥ १ ॥

---

१. (तै.२–६)  २. 'जायते प्राणो **मनस्सर्वेन्द्रियाणि च**'(मुं. २–१–३)

॥ तत्पूर्वकत्वाधिकरणम् ॥ ३ ॥

## ५. ॐ तत्पूर्वकत्वाद्वाचः ॐ

**वाचः** वागिन्द्रियस्य **तत्पूर्वकत्त्वात्** 'मन एव पूर्वरूपम्'[१] मनःकारणकत्व-श्रवणाद् वागिन्द्रियमुत्पत्तिमदेव न त्वनुत्पत्तिमदित्यर्थः ॥ १ ॥

॥ सप्तगत्यधिकरणम् ॥ ४ ॥

## ६. ॐ सप्तगतेर्विशेषितत्वाच्च ॐ

चशब्दः सप्तप्राणास्त्ववगतेरिति प्रमाणसमुच्चये । **गतेः** ज्ञानस्य । जनकानीन्द्रियाणि **सप्त** सप्तसङ्ख्याकानीति निर्णय एव । न त्वनिर्णयः । कुतः **विशेषितत्वात्** 'सप्त प्राणाः'[२] इति श्रुतौ गुहाशयां बुद्ध्यर्थं निहिताः विशेषणयुक्ततया निर्दिष्टत्वादित्यर्थः ॥ १ ॥

## ७. ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ

तुशब्दो वैलक्षण्यद्योतकः । यतो **हस्तादयस्तु** हस्तादीन्द्रियाणि तु । **स्थिते** स्थितं कर्म । तादर्थ्ये सप्तमी । कर्मार्थानि । **अतः** अस्मद्वैलक्षण्यात्तानि । एवं ज्ञानेन्द्रियसहभावेन **न** पठितानि । अतस्तेषां सप्तता सिद्धैवेत्यर्थः ॥२॥

॥ अण्वधिकरणम् ॥ ५ ॥

## ८. ॐ अणवश्च ॐ

प्राणाः इन्द्रियाणि **अणवः** स्वतोऽणूनीत्यर्थः । न केवलमणूनि किन्तु तेजसा व्याप्तानि चेति चशब्दार्थः ॥ १ ॥

॥ श्रेष्ठाधिकरणम् ॥ ६ ॥

## ९. ॐ श्रेष्ठश्च ॐ

---

१. '**मन एव पूर्वरूपं** वागुत्तररूपम्' (ऐ.आ.३-१-१)

२. '**सप्त प्राणा** प्रभवन्ति तस्मात्' (मुं.२-१-८)

यथेतरे प्राणा उत्पद्यन्ते एवं **श्रेष्ठः** मुख्यप्राणोऽपि विष्णोरुत्पद्यत एव न त्वनुत्पत्तिमानित्यर्थः ॥ १ ॥

## १०. ॐ न वायुक्रिये पृथगुपदेशात् ॐ

**वायुक्रिये** बाह्यवायुचेष्टाख्यकर्मणी **न** । 'एतस्मात्'[१] इति प्राणोत्पत्ति-श्रुतिप्रतिपाद्ये **न** भवतः । किन्तु मुख्यवायुरेव तत्प्रतिपाद्यः । कुतः पृथगुपदेशात् 'स प्राणमसृजत'[२] इत्यादौ मुख्यवायूत्पत्तेः वायुक्रियोत्पत्तिभ्यां सकाशात् पृथक् श्रवणादित्यर्थः ॥ २ ॥

॥ चक्षुराद्यधिकरणम् ॥ ७ ॥

## ११. ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ

तुशब्द एवार्थे । मुख्यप्राणोऽपि चक्षुरादिवत् परमात्माधीन एव न तु स्वतन्त्रः । कुतः । **तत्सहशिष्ट्यादिभ्यः** तैश्चक्षुरादिभिः सह मुख्यवायोरपि 'सर्वं ह्येवैतत्'[३] इति श्रुतौ पराधीनत्वोक्तेः । सर्वकर्तेत्यादिवचनोक्त-युक्तिभ्यश्चेत्यर्थः ॥ १ ॥

## १२. ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ

मुख्यप्राणस्य करणत्वात् । कर्तृप्रयोज्यत्वरूपकरणाभिन्नत्वात् चक्षुरादीनां तद्रूपत्वाच्च अस्मादेव वैलक्षण्यान्मुख्यस्येतरेभ्य उत्तमत्वसिद्धेः । **न दोषः** मुख्यप्राणस्वातन्त्र्यवाचिश्रुतेरवान्तरेश्वरपरत्वाभावदोषो नास्ति । कस्मादेवं कल्प्यत इति चेत् । **हि** यस्मात् । 'तानि ह वा'[४] इति श्रुतिस्**तथा** उक्त-प्रकारेण । **दर्शयति** ज्ञापयति । तस्मादित्यर्थः ॥ २ ॥

---

१. '**एतस्माज्जायते** प्राणो मनस्सर्वेन्द्रियाणि च' (मुं.२–१–३)

२. '–खं वायुर्ज्योतिरापः तपो मन्त्राः कर्म' (प्र.६–४)

३. '**सर्वं ह्येवैतत्** परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च ।
स ह्येक एवैतान्नयत्युन्नयति वशीकरोति' (गौपवनश्रुतिः)

४. '**तानि ह वा** एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इत्या-चक्षते' (माण्डव्यश्रुतिः)

॥ पञ्चवृत्त्यधिकरणम् ॥ ८ ॥

## १३. ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ

**मनोवत्** मनस इव । यथा मनसः मनोबुद्ध्यहङ्कारचित्तचेतनाख्यपञ्चप्रकारोपेतत्वं तथा मुख्यप्राणोऽपि **पञ्चवृत्तिः** प्राणापानादिपञ्चरूपवान् । कुतः यस्मात् 'अथ पञ्चवृत्त्या'[१] इति श्रुतौ तथा **व्यपदिश्यते** प्रतिपाद्यते । तस्मादित्यर्थः ॥ १ ॥

॥ अण्वधिकरणम् ॥ ९ ॥

## १४. ॐ अणुश्च ॐ

मुख्यप्राणः प्राणरूपेणा**णुः** । वायुरूपेण व्याप्तश्चेत्यर्थः ॥ १ ॥

॥ ज्योतिराद्यधिकरणम् ॥ १० ॥

## १५. ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ

**ज्योतिराद्यधिष्ठान**मित्यावर्तते । तत्त्वित्यन्वयः । तथाच **ज्योतिराद्यधिष्ठानं** अग्न्यादिभूतप्रेरकं **तत्** ब्रह्मैव । ज्योतिराद्यधिष्ठानं च चक्षुरादिप्रेरकं न जीवः । कुतः? तदामननात् 'यश्चक्षुषि तिष्ठन्'[२] इत्यादिना तथा प्रतिपादनादित्यर्थः ॥ १ ॥

## १६. ॐ प्राणवता शब्दात् ॐ

---

१. '**अथ पञ्चवृत्त्यैतत्प्रवर्तते** । प्राणो वाव पञ्चवृत्तिः । प्राणोऽपानो व्यान उदानः समान इति । तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते । प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्व्यान उदानादुदानः समानादेव समानः' (कौण्डिन्यश्रुतिः.)

२. अथाध्यात्मं यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १६ ॥ यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १७ ॥ **यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो** यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १८ ॥ (बृ.५.७.१६–१८)

परमात्मा स्वप्रयोज्यैरेव चक्षुरादिभिः करणैः **प्राणवता** जीवेन कर्त्रा दर्शनादि कारयति न जीवप्रयोज्यैः। कुतः? **शब्दात्** 'एष ह्यनेन'[1] इति श्रुतेरित्यर्थः ॥ २ ॥

## १७. ॐ तस्य च नित्यत्वात् ॐ

चक्षुरादीनां ब्रह्मकरणत्वेऽपि **तस्य** जीवस्य करणस्य **च** तयोः सम्बन्धस्य च **नित्यत्वात्**। तद्विवक्षया जीवकरणत्वश्रुतिरप्युपपद्यत इत्यर्थः ॥ ३ ॥

॥ त इन्द्रियाधिकरणम् ॥ ११ ॥

## १८. ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ

**श्रेष्ठात्** मुख्यप्राणात् **अन्यत्र** ये प्राणाः। **त एवेन्द्रियाणि** न तु मुख्यप्राणोऽपि। कुतः **तद्व्यपदेशात्** 'द्वादशैवेन्द्रियाणि'[2] इति श्रुतौ तथोक्तत्वादित्यर्थः ॥ १ ॥

## १९. ॐ भेदश्रुतेः ॐ

मुख्यप्राणस्य सर्वकर्तृत्वकारयितृत्वरूपभेदकधर्मस्यान्येषां तदभावस्य 'स्थित एव हि'[3] इति श्रुतौ श्रुतत्वात् न तस्य चक्षुराद्यविशेष इत्यर्थः ॥ २ ॥

## २०. ॐ वैलक्षण्याच्च ॐ

मुख्यप्राणस्य तदितरप्राणानाञ्च केवलेश्वराधीनत्वेश्वरजीवोभयाधीनत्वरूपवैलक्षण्यसत्त्वाच्च न तस्येन्द्रियत्वं किन्तु चक्षुरादीनामेवेत्यर्थः ॥ ३ ॥

---

१. '**एष ह्यनेन** आत्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मनयति बुद्ध्या बोधयति तस्मादेतावाहुः सृतिरसृतिरिति' (भाल्लवेयश्रुतिः)

२. '**द्वादशैवेन्द्रियाण्याहुः** प्राणो मुख्यस्त्वनिन्द्रियम्। द्रवतामिन्द्रियाणां हि नियन्ता प्राण एकराट्' (पौत्रायणश्रुतिः)

३. '**स्थित एव हीदं** मुख्यप्राणः करोति कारयति बलति बालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति नबालयन्ति न धत्ते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानि' (पौत्रायणश्रुतिः)

॥ सञ्ज्ञाधिकरणम् ॥ १२ ॥

## २१. ॐ सञ्ज्ञमूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ

तुशब्दोऽवधारणे। **सञ्ज्ञामूर्तिक्लृप्तिर्नामरूपात्मकदेहेन्द्रियप्रपञ्चोत्पत्तिः। त्रिवृत्कुर्वतः** पृथिव्यप्तेजसां मिश्रीभावं कुर्वतः परमात्मनः सकाशादेव भवति। न विरिञ्चात्। कुतः? **उपदेशात्** 'सर्वाणि रूपाणि विचित्य धीरः'[1] इति श्रुतेरित्यर्थः ॥ १ ॥

॥ मांसाधिकरणम् ॥ १३ ॥

## २२. ॐ मांसादिभौमं यथाशब्दमितरयोश्च ॐ

भौममित्युपलक्षणम्। यच्छरीरे कठिनं **मांसादि** तदेव **भौमं** पार्थिवं न सर्वशरीरम्। किं तर्हि **यथाशब्दं** 'यत्कठिनं सा पृथिवी'[2] इति श्रुतिमनुसृत्य। शरीरे **इतरयोः** अप्तेजसोश्च कार्यं शोणितमज्जादिरूपमङ्गीकार्यम्। यथा मांसादिकं भौमं पृथिवीकार्यम्। न केवलं पृथिवीकार्यं किन्नामेतरयोरप्तेजसोश्च कार्यं यथाश्रुत्यङ्गीकार्यमित्यर्थः ॥ १ ॥

## २३. ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ

पार्थिवमाप्यं तैजसमिति विशेषोक्तिस्तु **वैशेष्यात्** पृथिव्यादिभूतानां तत्तच्छरीरविशेषसंयोगमपेक्ष्य युज्यते। अतः न तद्विरोध इत्यर्थः। एतदध्यायोक्तसर्वस्यार्थस्यावधारणार्थमध्यायान्ते द्विरुक्तिः ॥ २ ॥

**इति श्रीजगन्नाथयतिविरचितायां सूत्रदीपिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥**

**॥ इति द्वितीयाध्यायः समाप्तः ॥**

---

१. '**सर्वाणि रूपाणि विचित्य धीरः** नामानि कृत्वाऽभिवदन्यदास्ते' (तै.आ.३-१२)

२. '**यत्कठिनं सा पृथिवी** यद्द्रवं तदापो यदुष्णं तत्तेजः' (गर्भ. ३)

# परिशिष्टम् — १

## ॥ ब्रह्मसूत्रानुक्रमणिका ॥

| सं | सूत्राणि | सू.सं. | पा. | अधि. | पृ.सं |
|---|---|---|---|---|---|
| | ॥ अ ॥ | | | | |
| १. | अकरणत्वाच्च न दोषस्तथा हि दर्शयति | १२ | ४ | ०७ | ३३१ |
| २. | अणवश्च | ०८ | ४ | ०५ | ३२१ |
| ३. | अणुश्च | १४ | ४ | ०९ | ३३९ |
| ४. | अदृष्टानियमात् | ५१ | ३ | १९ | ३०० |
| ५. | अधिकं तु भेदनिर्देशात् | २३ | १ | ०७ | ६५ |
| ६. | अधिष्ठानानुपपत्तेश्च | ३९ | २ | ११ | १५७ |
| ७. | अनुस्मृतेश्च | २५ | २ | ०७ | १३९ |
| ८. | अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् | ४८ | ३ | १८ | २८८ |
| ९. | अन्यत्राभावाच्च न तृणादिवत् | ०५ | २ | ०२ | १०७ |
| १०. | अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् | ०९ | २ | ०५ | ११५ |
| ११. | अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् | १५ | ३ | ०९ | २१६ |
| १२. | अन्तवत्त्वमसर्वज्ञता वा | ४१ | २ | ११ | १५९ |
| १३. | अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् | ३६ | २ | १० | १५२ |
| १४. | अपरिग्रहाच्चात्यन्तमनपेक्षा | १७ | २ | ०६ | १२७ |
| १५. | अपि स्मर्यते | ४५ | ३ | १८ | २८२ |
| १६. | अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् | ०९ | १ | ०४ | २४ |
| १७. | अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् | ०६ | १ | ०३ | १६ |
| १८. | अभिसन्ध्यादिष्वपि चैवम् | ५२ | ३ | १९ | ३०१ |
| १९. | अभ्युपगमेऽप्यर्थाभावात् | ०६ | २ | ०३ | ११० |
| २०. | अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि | २५ | ३ | १२ | २३८ |
| २१. | अविरोधश्चन्दनवत् | २४ | ३ | १२ | २३७ |

॥ प ॥

*****

# परिशिष्टम् – २

## द्वैतविशिष्टाद्वैताद्वैतदर्शनानुसारेणाधिकरण-सूत्र-सङ्ख्यासूचिका

### अथ द्वितीयाध्यायस्य प्रथमः पादः

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| अधिकरणानि | सू.सं | अधिकरणानि | सू.सं | अधिकरणानि | सू.सं |
| १. स्मृत्यधिकरणम् | ३ | १. स्मृत्यधिकरणम् | २ | १. स्मृत्यधिकरणम् | २ |
| २. नविलक्षणत्वाधिकरणम् | २ | २. योगप्रत्युक्त्यधिकरणम् | १ | २. योगप्रत्युक्त्यधिकरणम् | १ |
| ३. अभिमान्यधिकरणम् | २ | ३. न विलक्षणत्वाधिकरणम् | ९ | ३. न विलक्षणत्वाधिकरणम् | ८ |
| ४. असदधिकरणम् | ६ | ४. शिष्टापरिग्रहाधिकरणम् | १ | ४. शिष्टापरिग्रहाधिकरणम् | १ |
| ५. भोक्त्रधिकरणम् | १ | ५. भोक्त्रापत्यधिकरणम् | १ | ५. भोक्त्रापत्यधिकरणम् | १ |
| ६. आरम्भणाधिकरणम् | ७ | ६. आरम्भणाधिकरणम् | ६ | ६. आरम्भणाधिकरणम् | ७ |
| ७. इतरव्यपदेशाधिकरणम् | ६ | ७. इतरव्यपदेशाधिकरणम् | ३ | ७. इतरव्यपदेशाधिकरणम् | ३ |

| | | | | | |
|---|---|---|---|---|---|
| ८. श्रुतेस्तु शब्दमूलत्वाधिकरणम् | ५ | ८. उपसंहाराधिकरणम् | २ | ८. उपसंहाराधिकरणम् | २ |
| ९. नप्रयोजनाधिकरणम् | २ | ९. कृत्स्नप्रसक्त्यधिकरणम् | ६ | ९. कृत्स्नप्रसक्त्यधिकरणम् | ४ |
| १०. वैषम्यनैर्घृण्याधिकरणम् | ३ | १०.प्रयोजनवत्वाधिकरणम् | ५ | १०. सर्वोपेताधिकरणम् | २ |
| ११. सर्वधर्मोपपत्त्यधिकरणम् | १ | | | ११. न प्रयोजनवत्वाधिकरणम् | २ |
| | | | | १२. वैषम्यनैर्घृण्याधिकरणम् | ३ |
| | | | | १३. सर्वधर्मोपपत्त्यधिकरणम् | १ |
| आहत्य सूत्राणि | ३८ | | ३६ | | ३७ |

## अथ द्वितीयः पादः

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| अधिकरणानि | सू.सं | अधिकरणानि | सू.सं | अधिकरणानि | सू.सं |
| १. रचनानुपपत्त्यधिकरणम् | ४ | १.रचनानुपपत्त्यधिकरणम् | ९ | १.रचनानुपपत्त्यधिकरणम् | १० |
| २. अन्यत्राभावाधिकरणम् | १ | २. महद्दीर्घाधिकरणम् | ७ | २. महद्दीर्घाधिकरणम् | १ |

| | | | | | |
|---|---|---|---|---|---|
| ३. अभ्युपगमाधिकरणम् | १ | ३. समुदायाधिकरणम् | १० | ३. परमाणुकारणपराकरणाधिकरणम् | ६ |
| ४. पुरुषाश्माधिकरणम् | २ | ४. उपलब्ध्यधिकरणम् | ३ | ४. समुदायाधिकरणम् | १० |
| ५. अन्यथानुमित्यधिकरणम् | २ | ५. सर्वथाऽनुपपत्त्यधिकरणम् | १ | ५. अभावाधिकरणम् | ५ |
| ६. वैशेषिकाधिकरणम् | ७ | ६. एकस्मिन्नसम्भवाधिकरणम् | ४ | ६. नैकस्मिन्नसम्भवाधिकरणम् | ४ |
| ७. समुदायाधिकरणम् | ८ | ७. पशुपत्यधिकरणम् | ४ | ७. पाशुपताधिकरणम् | ५ |
| ८. असदधिकरणम् | ४ | ८. उत्पत्त्यसम्भवाधिकरणम् | ४ | ८. उत्पत्त्यसम्भवाधिकरणम् | ४ |
| ९. अनुपलब्ध्यधिकरणम् | ३ | | | | |
| १०. नैकस्मिन्नधिकरणम् | ४ | | | | |
| ११. पत्युरधिकरणम् | ५ | | | | |
| १२. उत्पत्त्यधिकरणम् | ४ | | | | |
| आहत्य सूत्राणि | ४५ | | ४२ | | ४५ |

अथ तृतीयः पादः

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| अधिकरणानि | सू.सं | अधिकरणानि | सू.सं | अधिकरणानि | सू.सं |
| १. वियदधिकरणम् | ७ | १. वियदधिकरणम् | ९ | १. वियदधिकरणम् | ७ |
| २. मातरिश्वाधिकरणम् | १ | २. तेजोधिकरणम् | ८ | २. मातरिश्वाधिकरणम् | १ |
| ३. असम्भवाधिकरणम् | १ | ३. आत्माधिकरणम् | १ | ३. असम्भवाधिकरणम् | १ |
| ४. तेजोऽधिकरणम् | १ | ४. ज्ञाधिकरणम् | १४ | ४. तेजोधिकरणम् | १ |
| ५. अबधिकरणम् | १ | ५. कर्त्रधिकरणम् | ७ | ५. अबधिकरणम् | १ |
| ६. पृथिव्यधिकरणम् | १ | ६. परायत्ताधिकरणम् | २ | ६. पृथिव्यधिकाराधिकरणम् | १ |
| ७. तदभिध्यानाधिकरणम् | १ | ७. अंशाधिकरणम् | ११ | ७. तदभिध्यानाधिकरणम् | १ |
| ८. विपर्ययाधिकरणम् | १ | | | ८. विपर्ययाधिकरणम् | १ |
| ९. अन्तराधिकरणम् | २ | | | ९. अन्तराविज्ञानाधिकरणम् | १ |
| १०. आत्माधिकरणम् | १ | | | १०. चराचरव्यपाश्रयाधिकरणम् | १ |
| ११. ज्ञाधिकरणम् | २ | | | ११. आत्माधिकरणम् | १ |
| १२. उत्क्रान्त्यधिकरणम् | ७ | | | १२. ज्ञाधिकरणम् | १ |

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| १३. व्यतिरेकाधिकरणम् | १ | | | १३. उत्क्रान्तिगत्यधिकरणम् | १४ |
| १४. पृथगधिकरणम् | २ | | | १४. कर्त्रधिकरणम् | ७ |
| १५. यावदधिकणम् | १ | | | १५. तक्षाधिकरणम् | १ |
| १६. पुंस्त्वाधिकरणम् | २ | | | १६. परायत्ताधिकरणम् | २ |
| १७. कर्तृत्वाधिकरणम् | १० | | | १७. अंशाधिकरणम् | ११ |
| १८. अंशाधिकरणम् | ८ | | | | |
| १९. अदृष्टाधिकरणम् | ३ | | | | |
| आहत्य सूत्राणि | ५३ | | ५२ | | ५३ |

## अथ चतुर्थः पादः

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| अधिकरणानि | सू.सं | अधिकरणानि | सू.सं | अधिकरणानि | सू.सं |
| १. प्राणोत्पत्त्यधिकरणम् | ३ | १. प्राणोत्पत्त्यधिकरणम् | ३ | १. प्राणोत्पत्त्यधिकरणम् | ४ |
| २. तत्प्रागधिकरणम् | १ | २. सप्तगत्यधिकरणम् | २ | २. सप्तगत्यधिकरणम् | २ |

| | | | | | |
|---|---|---|---|---|---|
| ३. तत्पूर्वकत्वाधिकरणम् | १ | ३. प्राणाणुत्वाधिकरणम् | २ | ३. प्राणाणुत्वाधिकरणम् | १ |
| ४. सप्तगत्यधिकरणम् | २ | ४. वायुक्रियाधिकरणम् | ४ | ४. प्राणश्रैष्ठ्याधिकरणम् | १ |
| ५. अण्वधिकरणम् | १ | ५. श्रेष्ठाणुत्वाधिकरणम् | १ | ५. वायुक्रियाधिकरणम् | ४ |
| ६. श्रेष्ठाधिकरणम् | २ | ६. ज्योतिराद्यधिष्ठानाधिकरणम् | २ | ६. मुख्यप्राणाणुत्वाधिकरणम् | १ |
| ७. चक्षुराद्यधिकरणम् | २ | ७. इन्द्रियाधिकरणम् | २ | ७. ज्योतिराद्यधिकरणम् | ३ |
| ८. पञ्चवृत्त्यधिकरणम् | १ | ८. सञ्ज्ञामूर्तिक्लृप्त्यधिकरणम् | ३ | ८. इन्द्रियाधिकरणम् | ३ |
| ९. अण्वधिकरणम् | १ | | | ९. सञ्ज्ञामूर्तिक्लृप्त्यधिकरणम् | ३ |
| १०. ज्योतिरधिकरणम् | ३ | | | | |
| ११. त इन्द्रियाधिकरणम् | ३ | | | | |
| १२. सञ्ज्ञाधिकरणम् | १ | | | | |
| १३. मांसाधिकरणम् | २ | | | | |
| आहत्य सूत्राणि | २३ | | १९ | | २२ |

# परिशिष्टम् – ३

## श्रीविजयीन्द्रतीर्थविरचितः

## ब्रह्मसूत्रन्यायसङ्ग्रहः

### द्वितीयोऽध्यायः

#### प्रथमः पादः

विरोधो युक्तिसमयश्रुतियुक्तियुतागमैः ।
समन्वयेऽपाक्रियते द्वितीयेऽङ्घ्रिषु च क्रमात् ॥ १ ॥

उक्ते समन्वयेऽत्राविरोधोक्तेस्तस्य हेतुता ।
समन्वयस्य सिद्ध्यैवाऽविरोध इति हेतुता ॥ २ ॥

पत्त्यादेरिव भङ्गेऽश्वगजादीनां प्रवर्तनम् ।
भङ्गे दुर्बलयुक्त्यादेः समयादेरतिक्रमः ॥ ३ ॥

द्वितीये बहिरङ्गत्वात् तद्विरोधोऽथवा हृतः ।
स्मृतीनां चतुरात्मत्वात् सर्वादौ तन्निराकृतिः ॥ ४ ॥

नान्यस्मृतिस्तद्विरोधान्मानं नित्या श्रुतिस्तु मा ।
मृदुक्त्याद्यभिमान्यर्थं प्रागभावेन कर्तृता ॥ ५ ॥

न जीवैक्यं वाक्यबलाज्ज्ञेयाऽनन्यस्वतन्त्रता ।
जीवोऽकर्ताऽहितकृतेर्नान्यसाम्यं श्रुतेर्हरेः ॥ ६ ॥

न फलार्थेशितुस्सृष्टिर्न वैषम्याद्यपेक्षणात् ।
स्वतान्त्र्यात् सर्वगुणयुग्द्वितीयाऽऽद्ये नयाः पयाः ॥

## द्वितीयः पादः

नाऽचेतनं जगत्कर्तृ नेशोऽनुग्राहमात्रकृत् ।
फलाभावान्न सिद्धान्तोऽकर्तृजीवान्वितं जडम् ॥ ८ ॥

प्रधानयुङ् न जीवो वारम्भोऽणुत्वादितो न किम् ।
नाणुपुञ्जोऽप्यतत्प्राप्तेर्ना सद्धेतुरदर्शनात् ॥ ९ ॥

न ज्ञानतास्यादृष्टत्वान्न दृष्टेस्सप्तभङ्गिता ।
रुद्रो न कर्ता दोषित्वन्न शक्तिः पुरुषाऽयुता ॥

## तृतीयः पादः

वियदुत्पत्तिमत् श्रुत्या वायुश्चाजन्यसम्भवात् ।
स्वातन्त्र्यान्नेश्वरोत्पत्तिर्वायोर्वा तेजसो जनिः ॥

आपोग्निद्वारतो जन्या अन्नं भूर्बहुयुक्तितः ।
लय ईशादेव लिङ्गाद् व्युत्क्रमाद् युज्यते लयः ॥ १२ ॥

विज्ञानमनसोश्चैवं नाश्रुतेर्ब्रह्मणो लयः ।
ब्रह्मजन्यः श्रुतेर्जीव उत्क्रान्त्यादेरणुश्च सः ॥ १३ ॥

जीवोऽभिन्नांशः पार्थक्यः ब्रह्मान्यश्चोपदेशतः ।
नित्योपाधित्वतो नित्योऽभिव्यक्तेर्धीसुखात्मकः ॥

कर्ता शास्त्रस्यार्थवत्त्वादंशोऽभेदभिदा श्रुतेः ।
विद्यादिभेदाद्देवादिनया एकोनविंशतिः ॥ १९ ॥

### चतुर्थः पादः

श्रुतेरेवेन्द्रियोत्पत्तिर्विशिष्य श्रवणान्मनः ।
मनोजन्या श्रुतेर्वाक् च धीन्द्रियेष्वेव सप्तता ।। १६ ।।

व्याप्ते प्रकाशतोऽणुत्वं मुख्यश्चोत्पत्तिमान् श्रुतेः ।
प्राणवच्चेशवशगो मनोवत् पञ्चरूपवान् ।। १७ ।।

बहिर्व्याप्नोति देहेऽणुर्न प्राणा जीवसाधनम् ।
श्रुत्याऽनिन्द्रियता मुख्ये सञ्ज्ञामूर्तिकृदीश्वरः ।। १८ ।।
आत्मदेहेऽधिकं त्वेकं नयास्तुर्ये त्रयोदश ।। १९ ।।

**इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे श्रीविजयीन्द्रतीर्थविरचिते द्वितीयोऽध्यायः ।**

## श्री सुधीन्द्रतीर्थविरचिता श्रीमद्ब्रह्मसूत्राधिकरणरत्नमाला

### अथ द्वितीयोऽध्यायः

### प्रथमः पादः

### १. ।। युक्त्यविरोधपादः ।।

पूर्वेण लक्षणेनोक्ते विरोधोऽत्र निरस्यते ।।
समन्वये युक्तिमत्ता श्रुतिन्याययुतागमैः ।।
आद्ये युक्तिविरोधस्तु पादे प्रथमके नये ।।
अपस्मृतिविरोधस्तु चातुरात्म्यान्निरस्यते ।। १ ।।

द्वितीये तु श्रुतिश्रौतस्मृत्यप्रामाण्यसाधिका ।
या युक्तिस्तद्विरोधस्याभावमाह हि सूत्रकृत् ।। २ ।।

दृढयुक्तिविरोधस्याभावमाह तृतीयके ।। ३ ।।

तत्रैव वेदगुणकाभावकर्तृत्वसाधिका ।।

या युक्तिस्तद्विरोधस्याभावमाह चतुर्थके ॥ ४ ॥

प्रबला श्रुतिसिद्धत्वाद् विष्णुकर्तृत्वबाधने ।
या युक्तिस्तद्विरोधस्याभावमाह हि पञ्चमे ॥ ५ ॥

स्वतन्त्रसाधनान्यत्वसाधिका बहुयुक्तयः ॥
यास्तद्विरोधस्याभावमाह षष्ठे नये हरिः ॥ ६ ॥

वेदानुभवसंवादी जीवकर्तृत्वसाधिका ॥
या युक्तिस्तद्विरोधस्याभावमाह हि सप्तमे ॥ ७ ॥

अनंशस्यपि मेशस्य व्यापारेऽप्येकदेशतः ।
व्याघात इति युक्तिर्या सर्वकर्तृत्वरोधिनी ॥
हीशस्य तद्विरोधस्याभावमाहाष्टमे नये ॥ ८ ॥

फलाभावात्मिका विष्णोः सर्वकर्तृत्वबाधिका ।
या युक्तिस्तद्विरोधस्याभावं नवमकेऽवदत् ॥ ९ ॥

विष्णोः कर्माद्यपेक्षायां दोषः स्यादनपेक्षणे ।
इत्थं बहुमुखेशस्य दृढा कर्तृत्वरोधिनी ॥
या युक्तिस्तद्विरोधस्याऽभावं दशम आह हि ॥ १० ॥

समस्तगुणपूर्णत्वे निर्दोषत्वे च मेशितुः ॥
या युक्तयस्तद्विरोधाभावमन्त्ये नयेऽब्रवीत् ॥ ११ ॥
इति द्वितीयाद्यपादे नया एकादशेरिताः ॥

## २. ॥ समयाविरोधपादः ॥

अत हैतुकपाषण्डसमयापाकृतिं प्रभुः ॥
द्वितीयस्य द्वितीयाङ्घ्रौ क्रमात् षट्कद्वयेऽकरोत् ॥
निरीश्वरं साङ्ख्यमतमादौ देवो निराकरोत् ॥ १ ॥

हीशोपसर्जनं कर्तृप्रधानमिति यन्मतम् ॥
नये द्वितीये भगवान् सूत्रकृत् तन्निराकरोत् ॥ २ ॥

तृतीये तु निराचक्रे लोकायतमतं हरिः ॥ ३ ॥

जीवोपसर्जनं कर्तृप्रधानमिति यन्मतम् ॥
तच्चतुर्थे निराचक्रे भगवान् सूत्रकृन्नये ॥ ४ ॥

प्रधानगुणको जीवो मुख्यकर्तेति यन्मतम् ।
तत्पञ्चमे निराचक्रे सूत्रकृद् भगवान्नये ॥ ५ ॥

वैशेषिकमतं षष्ठे निराचक्रे नये हरिः ॥ ६ ॥

सप्तमे वैभाषिकस्य मतं सौत्रान्तिकस्य च ॥
पाषण्डिनोऽणुनिचयं वादिनोऽपाकरोद्धरिः ॥ ७ ॥

शून्यकर्तृत्ववादं तु निराचक्रेऽष्टमे नये ॥ ८ ॥

विज्ञानकारणमतं नवमेऽपाकरोद्धरिः ॥ ९ ॥

सर्वप्रकारोपगन्तृमतं तु दशमे नये ॥
निराचक्रे ॥ १० ॥ उपान्त्ये तु मतं शैवादिकं नये ॥ ११ ॥

चरमे तु नये दोषविशेषानभिभाषितुम् ॥

निराचक्रे शक्तिमतं भगवान् सूत्रकृत् पुनः ॥
द्वितीयस्य द्वितीयाङ्घ्रौ द्वादशेति नयाः स्मृताः ॥

### ३. ॥ श्रुत्यविरोधपादः ॥

अथ श्रुतिविरोधापाकृतिं पादे तृतीयके ॥
द्वितीयस्य मिथश्चक्रे हरिः प्रथमके नये ॥

सोत्पत्यनुत्पत्तिवचोविरोधाभावमब्रवीत् ॥ १ ॥

वायुजन्यजनिश्रुत्योरविरोधं द्वितीयके ॥ २ ॥

ब्रह्मजन्यजनिश्रुत्योरविरोधं तदुत्तरे ॥ ३ ॥

अविरोधं चतुर्थे तु तेजोजनकवाक्ययोः ॥ ४ ॥

पञ्चमे त्वाहाविरोधं नयेऽब्जनकवाक्ययोः ॥ ५ ॥

ता अन्नमदूभ्यः पृथिवीति गिरोरविरोधकं

(या युक्तिस्तद्विरोधस्याभावमाह चतुर्थके ॥ ४ ॥

प्रबला श्रुतिसिद्धत्वाद् विष्णुकर्तृत्वबाधने ।)

षष्ठे नयेऽवदद् विष्णुरुक्तवैवं नयषट्कतः ॥ ६ ॥

अधिभूताधिदैवीयजन्मश्रुत्यविरोधकम् ॥
संहारकर्तृवचसोरविरोधं तु सप्तमे ॥ ७ ॥

प्राहाष्टमेऽधिभूतादिसंहारक्रमवाक्वये ॥ ८ ॥

विज्ञानमनसोश्चैव लयक्रमगिरोर्मिथः ।
अविरोधं नये प्राह नवमे सूत्रकृत् प्रभुः ॥ ९ ॥

दशमे तु नये ब्रह्मलयालयगिरोर्मिथः ॥ १० ॥

अविरोधं जीवजन्माजन्मवाचोरथाब्रवीत् ॥ ११ ॥

परिमाणगिरोर्ज्ञस्याविरोधं द्वादशे नये ॥ १२ ॥

आहैकरूपत्वानेकरूपत्वोक्त्योस्त्रयोदशे ॥ १३ ॥

जीवेशभेदाभेदोक्त्योरविरोधं चतुर्दशे ॥ १४ ॥

अथ ज्ञतदुपाध्योर्जन्यजन्युक्त्योः परस्परम् ।
नये पञ्चदशे प्राह विरोधाभावमीश्वरः ॥ १५ ॥

ज्ञस्याऽनन्दादिरूपत्वतदभावगिरोर्नये ॥
षोडशे प्राह ॥ १६ ॥ कर्तृत्वाकर्तृत्वोक्त्योः शरीरिणः ।

प्राह सप्तदशे ॥ १७ ॥ ज्ञस्येशांशानंशता गिरोः ॥

अष्टादशे नये प्राह विरोधाभावमच्युतः ॥ १८ ॥

ज्ञस्येशप्रतिबिम्बत्वाप्रतिविम्बत्ववाक्ययोः ॥
विरोधाभावमवदच्चरमे सूत्रकृन्नये ॥ १९ ॥

द्वितीयस्य तृतीयाङ्घ्रौ नया एकोनविंशतिः ॥

## ४. ॥ युक्त्युपेतश्रुत्यविरोधपादः ॥

श्रुतीनां न्याययुक्ताभिर्विरोधं श्रुतिभिर्मिथः ॥
अपाकृतो सूत्रकृता (करोत्सूत्रकारः) द्वितीयस्य तु तुर्यके ॥
सोत्पत्तिवाचोऽनुत्पत्तिवाचाऽऽदाववदन्नये ।

अविरोधमुपादानाभावयुक्त्या युजा हरिः ॥
मनोजन्माजन्मवाचोरविरोधं द्वितीयके ॥ २ ॥

वाग्जन्माजन्मवचसोरविरोधं तृतीयके ॥ ३ ॥

प्राणसङ्ख्यागिरोस्तुर्ये विरोधाभावमब्रवीत् ॥ ४ ॥

प्राणाणुत्वानणुत्वोक्त्योरविरोधं च पञ्चमे ॥ ५ ॥

षष्ठे मुख्यप्राणजन्माजन्मश्रुत्यविरोधकम् ॥ ६ ॥

तत्स्वातन्त्र्यास्वतन्त्रत्वगिरोराहाविरोधकम् ॥

सप्तमे ॥ ७ ॥ श्रेष्ठतद्दासभाववाचोरथाष्टमे ॥

आहाऽविरोधं ॥ ८ ॥ प्राणादेरणुतानणुता गिरोः ॥
श्रेष्ठस्य नवमे प्राहाविरोधं सूत्रकृन्नये ॥ ९ ॥

जीवेशाकरणत्वोक्त्योरविरोधं तदुत्तरे ॥
चक्षुरादेर्नये प्राह भगवात् सूत्रकृत् प्रभुः ॥ १० ॥

इन्द्रियत्वानिन्द्रियत्ववचसोर्भारतीपतेः ॥
एकादशनये प्राहाविरोधं सूत्रकृत् प्रभुः ॥ ११ ॥

विरिञ्चविष्णुजन्यत्ववचसोर्नामरूपयोः ॥
प्राहाऽविरोधं भगवान् सूत्रकृद् द्वादशे नये ॥ १२ ॥

आहाऽविरोधं चरमे एककारणवाक्ययोः ॥ १३ ॥

द्वितीयस्य तुरीयाङ्घ्रौ नया एवं त्रयोदश ॥

॥ इति द्वितीयाध्यायः ॥

## श्रीधीरेन्द्रतीर्थविरचितः
## विषयवाक्यसङ्ग्रहः

### अथ द्वितीयाध्यायस्य प्रथमः पादः

यतो वा स हि सर्वस्य कर्तेत्यादि स्मृतेर्नये । .
सर्वे वेदा इति वाचो नविलक्षणतानये ॥ १ ॥

मृदब्रवीदाप इतीत्यभिमानिनये वचः ।
यतो वा असदेवेदमित्याद्यं चाप्यसन्नये ॥ २ ॥

स हि सर्वस्य कर्तेति भोक्त्रापत्तिनयस्य तु ।
स इदं सर्वमसृजतेत्यारम्भणके नये ॥ ३ ॥

यतो वेत्युक्तमितरव्यपदेशनयस्य च ।
श्रुतेस्तु शब्दमूलत्वादित्यत्रापि तदेव हि ॥ ४ ॥

प्रयोजनाधिकरणे वैषम्यादिनये च तत् ।
गुणाः श्रुता इति वचः सर्वधर्मोपपत्तिके ॥ ५ ॥

## द्वितीयः पादः

स हि सर्वस्य कर्तेति नये साङ्ख्ये त्वनीश्वरे ।
एको वशी यतो वेति सेश्वरे साङ्ख्यके नये ॥ १ ॥

यतो वेत्यदिकं लोकायतिकादि नयत्रये ।
गुणाः श्रुतान्तगुणा इति वैशेषिके नये ॥ २ ॥

अणुपुञ्जवादादिष्वापादान्तनयेष्वपि ।
यतो वेत्येदि कर्तृत्वबोधकं विषयार्पकम् ॥ ३ ॥

## तृतीयः पादः

वियन्नयस्य चाऽकाशः सम्भूत इति तद्वचः ।
आकाशाद् वायुरित्येतन्मातरिश्वनये स्फुटम् ॥ १ ॥

असम्भवस्त्विति नये तद्ब्रह्मेत्युक्तमत्र च ।
तेजोऽत इत्यधिकृतेर्वायोरग्निरितीरितम् ॥ २ ॥

अग्नेराप इति ह्येतद् आप इत्युदिते नये ।
पृथिव्यधिकाररूपनयेऽद्भिः (द्भ्यः) पृथिवीति च ॥ ३ ॥

यत्प्रयन्तीत्यादिवाक्यं तदभिध्यानके नये ।
विपर्ययेणेतिनये भूतानीति क्रमादिति ॥ ४ ॥

तद्यच्छेद्ज्ञानं इत्याद्यमन्तरेत्यादिके नये ।
नाऽऽत्मो श्रुतेरिति नये नित्यानां नित्यतावचः ॥

सर्वे एते चिदात्मानः इति ज्ञोऽत नये वचः ।
वागणुर्ह्येष आत्मेति ह्युत्क्रान्त्यादिनयस्य तु ॥ ६ ॥

स पञ्चधेत्यादिवाक्यं व्यतिरेकनयस्य हि ।
द्वा सुपर्णेत्यादिवाक्यं पृथगुपदेशाह्वये नये ॥ ७ ॥

यावदात्मेत्यधिकृतौ स नित्य इति तद्वचः ।
विज्ञानात्मेति पुंस्त्वादिवत्त्वस्येति नयस्य हि ॥ ८ ॥

यत्कर्म कुरुतेत्यादि जीवकर्तृत्वसन्नये ।
वस्तुतो ज्ञोत एवेत्याद्यापादान्तनयेऽपि सः ॥ ९ ॥

## चतुर्थः पादः

स इदं सर्वमित्याद्यं तथा प्राणा इतीरिते ।
सर्वेन्द्रियाणीति च नये तत्प्राक्श्रुतेरिति ॥ १ ॥

वागुत्पत्तिनये प्राणसङ्ख्याव्याप्तिनये च तत् ।
स प्राणमात्मत इति श्रेष्ठश्चेति नयस्य तत् ॥ २ ॥

चक्षुरादिवदित्यत्र प्राणः परवशेति वाक् ।
प्राणो वावेत्यादिवाक्यं पञ्चवृत्त्याह्वये नये ॥ ३ ॥

अणुश्चेति नये वाक्ये प्राचीन प्राणवाचकम् ।
तानीहवेति वा ज्योतिरद्यधिष्ठानके नये ॥ ४ ॥

त इन्द्रियाणीति नये प्राणो वेत्यादिकं वचः ।
सञ्ज्ञामूर्तेः क्लृप्तिनये नामरूपादिसृष्टिवाक् ॥ ५ ॥

मांसादिभौममित्यत्र तासां त्रिवृतमित्यदः ।
टीकायां विषयवाक्यानि सङ्गृहीतानि तानि वै ॥ ६ ॥

# परिशिष्टम् – ४

## प्रमाणसङ्ग्रहानुक्रमणिका

| प्रमाणवचनानि | पृष्ठसङ्ख्या |
|---|---|
| ॥ अ ॥ | |
| अग्नेरापः (तै.२-१) | १९६ |
| अङ्गमङ्गी समादाय – (स्मृतिः) | ११६ |
| अचिन्त्ययेशशक्त्यैव – (पाद्मे) | २४५ |
| अजायमानो बहुधा – (तै.आ.३-१३) | १८९ |
| अजो ह्येको जुषमाणः –( म.ना १०-५) | ५२ |
| अणुनैतत् सृज्यते – (सौत्रायणश्रुतौ) | ३३८ |
| अणुभिः पश्यति – (कौण्डिन्यश्रुतिः) | ३२० |
| अणुमात्रोऽप्ययं जीवः – (ब्रह्माण्डपुराणे) | २३७ |
| अणुर्ह्येष आत्मा – (गौपवनश्रुतिः) | २२८ |
| अत एव हीदं – (भाल्लवेयश्रुतिः) | २१२ |
| अतः परं यदव्यक्तम् – (भागवतम्) | २८६ |
| अथ कस्मादुच्यते परं ब्रह्मेति – (अथर्वशिरः) | १७२ |
| अथ कस्मादुच्यते परम् इति – (आग्निवेश्यश्रुतिः) | ३५४ |
| अथ पञ्चवृत्त्यैतत् प्रवर्तते – (श्रुतिः) | ३३४ |
| अथ यः स जीवः – (भाल्लवेयश्रुतिः) | ७० |
| अथ यस्सदोषः साञ्जनः – (काषायणश्रुतिः) | ७९ |
| अथ ह चेतनाश्चाचेतनाश्च – (श्रुतिः) | १८० |
| अथ ह नित्याः – (श्रुतिः) | १७९ |
| अथ ह वाव नित्यानि – (भाल्लवेयश्रुतिः ) | १६९ |

॥ उ ॥



॥ ऋ ॥



॥ ए ॥



॥ क ॥

॥ प ॥

१. भाष्यदीपिकारीत्या ब्रह्मतर्कवचनमिदम् । परन्तु भाष्यरीत्या बृहत्संहितावचनमिति भाति ।

॥ स ॥

*****